# Sayana's Commentary

ON

# THE RIGVEDA

Passages supplementing those contained in

MACDONNEL'S

# VEDIC READER

EDITED BY

**PASHUPATI NATH SHASTRI, M.A., B L.**

*Lecturer on Vedas & Mimamsa Calcutta University*

HUMPHREY MILFORD
OXFORD UNIVERSITY PRESS
LONDON BOMBAY MADRAS CALCUTTA
1921

# CONTENTS

## VEDIC HYMNS

एतच्चाग्निमित्यादिसूक्तं नवर्चम्। अग्निं नव मधुच्छन्दा वैश्वामित्र इत्यनुक्रमणिकायामुक्तत्वात्। विश्वामित्रपुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टृत्वात् तदीय ऋषिः। ऋष गताविति धातुः। सर्वधातुभ्य इन्। उ० ४।११७। इगुपधात् कित् उ० ४।११९। वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान् स्वयम्भूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते। अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्तदृषयोऽभवन्। तै० आ० २।९ इति। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनादृषित्वमित्यभिप्रेत्य स्मर्य्यते। युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवेति॥ ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्य्यते। अविदित्वा ऋषिं छन्दो दैवतं योगमेव च। योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः॥ ऋषिच्छन्दो दैवतानि ब्राह्मणार्थं स्वराद्यपि। अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यत इति॥ वेदनर्विधस्य स्मर्य्यते। स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च। मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पद इति॥ अग्निमित्यादिसूक्तस्य छन्दोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम्। आदौ गायत्रं प्राग्-

धिरण्यस्तूपात्। अनु १२।१४ इति। हिरण्यस्तूप ऋषिर्येषां मन्त्राणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं छन्द इत्यर्थः। पुरुषस्य पापसम्बन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते। छादयन्ति ह वा एनं छन्दांसि पापात् कर्मण इति। अथवा चीयमानाग्निसन्तापस्याच्छादकत्वाच्छन्दः। तच्च तैत्तिरीया आमनन्ति। प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वातिष्ठत् तं देवा बिभ्यतो नोपायन् ते छन्दोभिरात्मानं छादयित्वोपायन् तच्छन्दस छन्दस्त्वम्। तै० सं० ५।६।६।१। यद्वा अपमृत्युं वारयितुमाच्छादयतीति छन्दः। तदपि छान्दोग्योपनिषदि आम्नातम्। देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरात्मानमाच्छादयन् यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम्। छा० उ० १।४।२ इति। तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते। दिवा वै नोऽभूदिति तद्देवानां देवत्वमिति। अतो दीव्यतीति देवः। मन्त्रेण द्योत्यत इत्यर्थः। अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः। तथा चानुक्रमणिकायामुक्तम्। मण्डलादिष्वाग्नेयमैन्द्रात्। अनु१२।१२इति। तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह।

# सायणभाष्यम् ।

## AGNI. I. 1.

१। अग्निनामकं देवमीळे। स्तौमि। ईड़ स्तुतौ। पा० २४१९। इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसम्प्रदायप्राप्तः। तथा च पठ्यते अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः। अज्मध्यस्थस्य ढकारस्य ळ्हकारं वै यथाक्रममिति। मन्त्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते। कीदृशमग्निम्। यज्ञस्य पुरोहितम्। यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धिनि पूर्व्वभाग आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्। देवम्। दानादिगुणयुक्तम्। पुनः कीदृशम्। होतारमृत्विजम्। देवानाम् यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथा च श्रूयते। अग्निर्वै देवानां होतेति। पुनरपि कीदृशम्। रत्नधातमम्। यागफलरूपाणां रत्नानामतिशयेन धारयितारम्। पोषयितारम् वा। अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति। नि० ७।१४।

अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरिता-दक्ताद्दग्धाद्वा नीतात् स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति। अग्निमीळ इति।

अस्यायमर्थः। सामान्येन सर्व्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितमतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते। कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवता अभिधीयत इति प्रश्नस्याग्रणीरित्यादिकमुत्तरम्। देवसेनामग्रे स्वय नयतीत्यग्रणीः। एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तम्। तथा च ब्राह्मणान्तरम। अग्निर्वै दे--वानां सेनानीरिति। एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे आमनन्ति। अग्निर्मुखं प्रथमो देवतानामिति मन्त्रः। अग्निरवमो देवतानामिति च। वाजसनेयिनस्त्वेवमामनन्ति। स वा एषोऽग्रे देवतानामजायत यस्मादग्निर्नामेति। यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्व्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात्प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम्। सन्नममानः सम्यक् स्वयमेव प्रह्वीभवन्नङ्गं स्वकीयं शरीरं नयति

काष्ठदाहे हविःपाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम् । स्थूलाष्ठीविनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्वक्ति । तत्र न क्नोपयतीत्युक्ते न स्नेहयति । किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति । शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते । इत इण्गतौ । धा० २४।३६ । इति धातुः । अक्तोऽञ्जूव्यक्तिम्रक्षणकान्तिगतिषु । धा० २९।२१ । इति धातुः । दग्धो दह भस्मीकरणे । धा०२३।२२ । इति धातुः । नीतो णीञ् प्रापणे । धा० २२।५ । इति धातुः । अग्निशब्दो ह्यकारगकारनिशब्दानपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते । अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते । यद्वा दहतिधातुजन्याद्दग्धशब्दाद्गकारमादत्ते । नीरिति नयतिधातुः । स च ह्रस्वो भूत्वा परो भवति । ततो धातुत्रयं मिलित्वाग्निशब्दो भवति । यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविःपाके च प्रेरयतीति समुदायार्थः । तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिदर्शनायैषाग्निमील इत्यृग्भवतीति । तामेतामृचं यास्क एवं व्याख्यातवान् । अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञस्य देवो दानाद्वा दीपनाद्वा द्यो-

तनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता होतारम् ह्वातारम् जुहोतेर्होतेत्यौर्णवाभो रत्नधातम रमणीयानां धनानां दातृतमम्। नि० ७।१५। इति। अस्यायमर्थः। इडतिधातोः स्तुत्यर्थत्वम् प्रसिद्धम्। धातूनामनेकार्थत्वमिति न्यायमाश्रित्य याञ्चाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः। पुरोहितशब्दो द्वितीयाध्याये। नि० २।१२। यद्देवापिः शंतनवे पुरोहित इत्येतामृचमुदाहृत्य पुर एनं दधातीति व्याख्यातः। तैत्तिरीयाश्च पौरोहित्ये स्पर्द्धमानस्य पश्वनुष्ठानम् विधाय तत्फलत्वेन पुर एनं दधति इत्यामनन्ति। देवशब्दो दानदीपनद्योतनानामन्यतममर्थमाचष्टे। यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति। दीपनद्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः। यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद्द्युस्थानो भवति। देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निर्व्यतिरिक्ता देवता नान्वेषणीया। होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति। और्णवाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते। अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम्। रत्नशब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः। रमणीयत्वाद्रत्नत्वम्। दधातिधातु-

रत्न दानार्थवाचीति । तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम् ।

२ । अयमग्निः पूर्व्वेभिः पुरातनैर्भृग्वङ्गिरः प्रभृतिभिऋषिभिरीड्यः स्तुत्यो नूतनैरुतेदानीन्तनैरस्माभिरपि स्तुत्यः । सोऽग्निः स्तुतः सन्निह यज्ञे देवान् हविर्भुज आवक्षति । वह प्रापण इति धातुः । आवहत्वित्यर्थः । पूर्वेभिरित्यत्र बहुलं छन्दसि । पा० ७।१।१० । इति भिस ऐसादेशाभावः । पूर्वं पर्वं अर्वं पूरण इति धातुः । पूर्वतिधातोरन्प्रत्यय औणादिकः । इन्प्रत्ययान्त ऋषिशब्द ऋष्यन्धकेति निपातनात् । पा० ४।१।११४ । लघूपधगुणाभावः । ७।३।८६ । कित्प्रत्ययो वात्र ज्ञेयः । उ० ४।११९ । तौ शब्दौ नित्स्वरेणाद्युदात्तौ । ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात्तित्स्वरितम् । पा० ६।१।१८५ । इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेनेडवन्देत्यादिना । पा० ६।१।२१४ । आद्युदात्तत्वम । नवस्य नू आत्मनप्खाश्च । पा० ५।४।३०।६ । इति वार्त्तिकेन नवशब्दस्य नू इत्यादेशस्तनप्प्रत्ययश्च महावार्त्तिके विहितः । ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्व्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः । उच्चावचेष्वर्थेषु निपतन्तीति निपातत्वम् । तर्हि निपाता

आद्युदात्ताः। फि० ४।१२। इत्युकारस्योदात्तः प्राप्त इति चेत्। न। प्रातःशब्दवदन्तोदात्तत्वात्। यथा प्रातःशब्दो-ऽन्तोदात्तत्वेन स्वरादिषु पठितः। पा० १।१।३७। एवमुत-शब्दस्यापि पाठो द्रष्टव्यः स्वरादेराकृतिगणत्वात्। यद्वा एवादीनामन्तः। फि० ४।१४। इत्यन्तोदात्तः। स इत्यत्र फिट्स्वरः। देवशब्दः पूर्व्ववत्। देवानित्यस्य नकारस्य संहितायाम् दीर्घादटि। पा० ८।३।६ इति रुत्वम्। अत्रानु-नासिकः। पा० ८।३।२। इत्यनुवृत्तावातोटिनित्यम्। पा० ८।३।३। इत्याकारः सानुनासिकः। भो भगो। पा० ८।३।१७। इति रोर्य्यकारः। स च लोपः शाकल्यस्य, पा० ८।३।१६, इति लुप्यते। तस्यासिद्धत्वात् पा० ८।२।१, न पुनः सन्धिः कार्य्यः। आङो निपातत्वादाद्यु-दात्तत्वम्। इदमो ह्रप्रत्यये सति निष्पन्नत्वात्. पा० ५।३।११ इहशब्दे प्रत्ययस्वरः। वहतिधातोर्लोड़र्थे छान्दसो ल्टट्। तस्य स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः। यद्वा लेटि सिब्बहुलम्। पा० ३।१।३४। इति सिप्प्रत्ययः। लेटोऽडाटौ, पा० ३।४।९४, इत्यड़ागमश्च। ततो वक्षतीति सम्पद्यते। तस्य तिङन्तत्वान्निघातः। संहितास्वराः पूर्व्ववत्।

३। आधाने तृतीयेष्टौ प्रथमाज्यभागस्यानुवाक्या। श्रौ २।१। सूक्तगता तृतीया। तां तृतीयामृचम् आह। योऽयं

होता सुत्योऽग्नि स्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत्। प्राप्नोति। कीदृशं रयिम्। दिवे दिवे पोषमेव। प्रतिदिनम् पुष्यमाणतया वर्द्धमानमेव। न तु कदाचिदपि क्षीयमाणम्। यशसम्। दाना-दिना यशोयुक्तम्। वीरवत्तमम्। अतिशयेन पुत्रभृत्यादि वीरपुरुषोपेतम्। सति हि धने पुरुषाः सम्पद्यन्ते। रयि-शब्दो मघमित्यादिधननामसु पठितः। तत्र फिट् स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। इतश्च लोपः। पा० ३।४। ९७। इतीकारलोपः। लेटोऽडाटौ पा० ३।४।९४। इत्य-ड़ागमः। ततोऽश्नवदिति भवति। तस्य निघातः यजन्तत्वात्। पा० ६।१।१९७। पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽप्येवादीनामन्त इत्यन्तोदात्तत्वम्। वकारान्ताद्दिव्शब्दात् परस्याः सप्तम्याः सुपां सुलुक्, पा० ७।१।३९ इत्यादिना शेभावे सति। सावेकाच इत्यादिना पा० ६।१।१६८। ऊडिदम्पदाद्यप्पुम्रैद्युभ्य इत्यादिना वा। पा० ६।१।१७१। तस्योदात्तत्वम्। नित्यवीप्सयोः। पा० ८।१।४। इति द्विर्भावे सत्युत्तरभागस्यानुदात्तं च। पा० ८।१।३। इत्यनुदात्तत्वम्। यशोऽस्यास्तीति विग्रहे सत्यर्शआदिभ्योऽच्। पा० ५।२।१२७। इत्यच्प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणान्तो-

दात्ताद्दीरशब्दादुत्तरयोर्मतुप्तमपोः पित्वादनुदात्तत्वम्। ह्रस्वनुड्भ्याम्। पा० ६।१।१७६। इति तु न। सावर्णान्तत्वात्, न गोश्वन्, पा० ६।१।१८२, इति प्रतिषेधः।

४। अभिप्लवषडहस्य मध्यवर्तिषूक्थ्येषु तृतीयसवने मैत्रावरुणस्याग्नेय यज्ञमित्यादिको वैकल्पिकोऽनुरूपस्तृचः। एतच्च सप्तमाध्याय एह्यूष्वित्यादिखण्डे सूत्रितम्। अग्निं वो वृधन्तमग्ने य यज्ञमध्वरम्। आ० ७।८। इति। तस्मिंस्तृचे या प्रथमा सा सूक्ते चतुर्थी। तामेता चतुर्थीमृचमाह। हे अग्ने त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवानसि स इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गं गच्छति। प्राच्यादिचतुर्दिगन्तेष्वाहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति। परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्। अध्वरम्। हिंसारहितम्। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति। अग्निशब्दस्य षाष्ठिकम्। पा० ६।१।१९८। आमन्त्रिताद्युदात्तत्वम्। न विद्यते ध्वरोऽस्येति बहुव्रीहौ नञ्सुभ्याम्, पा० ६।२।१७२, इत्यन्तोदात्तत्वम्। विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वम् वाधित्वा पूर्ववर्णस्य लिति। पा० ६।१।१९३। इत्युदात्तत्वम्। परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते। पा० ६।२।२।

तदपवादत्वेन कृदुत्तरप्रकृतिस्वरत्वम्। पा० ६।२।१३९। असोति तिङन्तस्य यद्‌वृत्तान्नित्यम्। पा० ८।१।६६। इति निघाताभावः।

५। अयमग्निर्देवोऽन्यैर्देवैर्हविर्भोजिभिः सहागमत्। अस्मिन् यज्ञे समागच्छतु। कीदृशोऽग्निः। होता होमनिष्पादकः। कविक्रतुः कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम। अतः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः। अनृतरहितः। फलमवश्यं प्रयच्छतीत्यर्थः। चित्रश्रवस्तमः। श्रूयत इति श्रवः कीर्त्तिः। अतिशयेन विविधकीर्त्तियुक्तः। कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम्। सत्सु-साधुः सत्य' सत्यादशपथे। पा० ५।४।६६। इत्यत्रान्तोदात्तो हरदत्तेन निपातितः। लोडन्तस्य गच्छत्विति शब्दस्य छत्वा-भावः। उकारलोपश्छान्दसः। ततो रूप गमदिति भवति। स्पष्टमन्यत्।

६। अङ्गेत्यभिमुखीकरणार्थो निपातः। अङ्गाग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत् तवैव सुखहेतुरिति शेषः। हे अग्निरोऽग्ने। एतच्च सत्यं न खलु विसंवादोऽस्ति यजमानस्य वित्तादिसम्पत्तौ सत्या-

सुत्तरक्रत्वनुष्ठानादग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्यायनिनः समामनन्ति । यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रमिति । अङ्गशब्दस्य निपातत्वेऽपि, फिं ४।१२ । अभ्यादित्वादन्तोदात्तत्वम् । दाश्वान् साह्वान् पा० ६।१।१२ । इति सूत्रेण दाशृ दाने इति धातोः क्वसुप्रत्ययो निपातितः । तत्र प्रत्ययस्वरः । आमन्त्रितस्याग्निशब्दस्य पदात्परत्वेनाष्टमिकानुदात्तत्वम्, पा० ८।१।१९, न शङ्कनीयम्, अपादादौ, पा० ८।१।१८, इति पर्युदस्तत्वात् । ततः षाष्ठिकम् । पा० ६।१।१९८ । आद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेन, फिं २।३ । आद्युदात्तत्वप्रसक्तावपि भदि कल्याणे इति धातो रुपरि रक्प्रत्ययेन निपातनात्, उ० २।२८ । अन्तोदात्तत्वम् । अस्मिन् वाक्ये यच्छब्दप्रयोगान्निपातैर्यद्यदिहन्त पा० ८।१।३० । इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण । पा० ३।१।३३ । सति शिष्टेन करिष्यसिशब्द उपान्त्योदात्तः । तवेत्यत्र युस्मदस्मदोर्ङसि । पा० ६।१।२११ । इत्याद्युदात्तत्वम् । अङ्गिरा अङ्गारा इति यास्कः । ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति । येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति । तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम् । अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम् ।

७। अग्नीषोमप्रणयन उपत्वाग्न इत्यादिकोऽनुवचनीयस्तृचः। एतच्च ब्राह्मणे समाम्नातम्। उपत्वाग्ने दिवे दिव उपप्रियं पनिप्नतमिति विसृश्यैकां चान्वाहेति। तस्मिंस्तृचे या प्रथमा सा सूक्ते सप्तमी। तामेतां सप्तमीमृचमाह।

हे अग्ने वयमनुष्ठातारो दिवे दिवे प्रतिदिनं दोषावस्ता रात्रावहनि च धिया बुद्ध्या नमो भरन्तो नमस्कारं सम्पादयन्त उप समीपे त्वैमसि। त्वामागच्छामः। उपशब्दस्य निपातस्वरः। फि॰ ४।१२। त्वामौ द्वितीयायाः। पा॰ ८।१।२३। इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः। दोषाशब्दो रात्रिवाची। वस्त इत्यहर्वाची। द्वन्द्वसमासे कार्त्तकौजपादित्वात्। पा॰ ६।२।३७। आद्युदात्तः। सावेकाचः। पा॰ ६।१।१६८। इति धियो विभक्तिरुदात्ता। नम इति निपातः। भरन्त इत्यत्र शपः पित्त्वाच्छतुर्लसार्व्वधातुकत्वाच्चानुदात्तत्वे सति। पा॰ ६।१।१८६। धातुस्वरः शिष्यते। इमसीत्यत्रेदन्तो मसिः। पा॰ ७।१।४६ इत्यादेशो निघातश्च॥

८। पूर्व्वमन्त्रे त्वामुपैम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्। राजन्तम्। दीप्यमानम्। अध्वराणां राक्षसकृतहिंसारहितानाम् यज्ञानां गोपां रक्षकम्। ऋतस्य सत्यस्यावश्यंभाविनः कर्म्मफलस्य दीदिविं पौनःपुन्येन भृशं

वा द्योतकम्। आह्वयाधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्म्मफलं स्मर्थ्यते। स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिर्वर्द्धमानम्। राजन्तम् वर्द्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते। दीदिविशब्दस्याभ्यस्तानामादिः पा० ६।१।१८९ इत्याद्युदात्तत्वम्। दमशब्दो वृषादित्वात् पा० ६।१।२०३ आद्युदात्तः।

९। हे अग्ने स त्वं नोऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव। तथा नोऽस्माकम् स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। तत्रोभयत्र दृष्टान्तः। यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत्। अस्मच्छब्दादेशस्य न इत्येतस्यानुदात्तं सर्व्वम् पा० ८।१।१८ इत्यनुदात्तत्वम्। चादयोऽनुदात्ताः। फि० ४।१६। इतीवशब्दोऽनुदात्तः। इवेन नित्यसमासः पूर्व्वपदप्रकृतिस्वरत्वं च वक्तव्यम्। पा० २।१।४।२ इति समस्तपितेवेति शब्दो मध्योदात्तः। शोभनमुपायनं यस्येति बहुव्रीहौ नञ्सुभ्यामित्यन्तोदात्तत्वम्। सचस्वेत्यत्र पदात्परत्व नास्तीति न निघातः लसार्व्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः॥

# SAVITṚ I. 35.

ह्वयाम्यग्निमित्येकादशर्चं पञ्चमं सूक्तं। हिरण्य-स्तूप ऋषिः। आद्या नवमी च जगतीच्छन्दस्के। शिष्टास्त्रिष्टुभः। कृत्स्नस्य सूक्तस्य सविता देवता। आद्याया ह्वयाम्यग्निमित्यस्या अग्निमित्रावरुणा-रात्रिसवित्राख्या लिङ्गोक्तदेवताः। तथा चानु-क्रान्तं। ह्वयाम्येकादश सावित्रं नवमी जगत्याद्या च लिङ्गोक्तदैवतपादास्त्रय इति॥ अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सूक्तं सावित्रं निवि-द्धानम्। तृतीयस्य चार्यमेति खण्डे सूत्रितम्। ह्वयाम्यग्निमस्य मे द्यावापृथिवी इति तिस्र इति।

१। स्वस्तयेऽस्माकमविनाशाय। स्वस्तीत्यविनाश-नाम। नि ३।२१। इति यास्कः। प्रथममादावग्निं ह्वयामि। इहास्मिन् कर्मण्यवसेऽस्मद्रक्षणाय मित्रावरुणौ ह्वयामि। जगतो जङ्गमस्य प्राणिजातस्य निवेशनीमुपवेशनहेतु-

भूताम् रात्रीं रात्रिदेवताम् ह्वयामि। जङ्गमाः सर्व्वे प्राणिनो दिवसे स्वस्वव्यापारान् कृत्वा स्वस्वगृहे रात्रावुपविशन्तीति प्रसिद्धं। ऊतयेऽस्मद्रक्षणार्थं सवितारम् देवम् ह्वयामि। मित्रावरुणौ देवताद्वन्द्वे चेति पूर्व्वपदस्यानङादेशः। देवताद्वन्द्वे चेत्युभयपदप्रकृतिस्वरत्वम्। रात्रीं रात्रेश्चाजसौ, पा० ४।१।३१। इति ङीप्। निवेशनीं। निविशन्त्यस्यामिति निवेशनी। करणाधिकरणयोश्चेति ल्युट्। टिड्ढाणञित्यादिना। पा० ४।१।१५। ङीप्। ऊतये। अवतेः क्तिनि ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊट्। ऊतियूतीत्यादिना क्तिन उदात्तत्वम्॥

२। सविता सूर्य्यः कृष्णेन रजसा कृष्णवर्णेन लोकेन। कृष्णं कृष्यतेर्निकृष्टो वर्णः। नि० २।२०। इति यास्कः। लोका रजांस्युच्यन्ते। नि० ४।१९। इति च। अन्तरिक्षलोको हि सूर्य्यागमनात् पुरा कृष्णवर्णो भवति। तेनान्तरिक्षमार्गेणावर्त्तमानः पुनःपुनरागच्छन् अमृतं देवम् मर्त्यं मनुष्यं च निवेशयन् स्वस्वस्थानेऽवस्थापयन्। यद्वा। अमृतं मरणरहितं प्राणं मर्त्यं मरणसहितं शरीरं च निवेशयन्। तथा चारण्यकाण्डे अमर्त्यो मर्त्येना सयोनिरित्येतस्य मन्त्रभागस्य व्याख्यानरूपे ब्राह्मणे यथोक्तोऽर्थोऽवगम्यते। मर्त्यानि ह्येमानि शरीराणि अमृतैषा देवता ऐ० आ० २।१।८। इति।

यथोक्तगुणोपेतः सविता देवो भुवनानि सर्व्वान् लोकान्-पश्यन् अवेक्षमाणः। प्रकाशयन्नित्यर्थः। हिरण्ययेन सुवर्ण-निर्मितेन रथेनायाति। अस्मत्समीपमागच्छति। अमृतं। मृतं मरण नास्त्यस्येति बहुव्रीहौ नञो जरमरमित्रमिता इत्युत्तरपदाद्युदात्तत्वम्। मर्त्यं मर्ते भवम्। भवे छन्द-सीति यत्। यतोऽनाव इत्याद्युदात्तत्वम्। हिरण्ययेण ऋत्व्य-वास्त्वेत्यादिना पा० ६।४।१७५। मयटो मकारलोपो निपातितः। यस्येति लोपे प्रत्ययस्वरः। भुवनानि। भू सत्तायाम्। भूधूसूभ्रस्जिभ्यश्छन्दसि। उ० २।८०। इति क्युन् प्रत्ययः। योरनादेश उवङादेशः। नित्वादाद्यु-दात्तत्वम्।

२। देवो दीप्यमानः सविता प्रवता प्रवणवता मार्गेण याति। गच्छति। तथोद्वतोत्कृष्टेनोर्ध्वदेशयुक्तेन मार्गेण याति। उदयानन्तरम् आमध्याह्नमूर्ध्वो मार्गः तत उपरि आ-सायम् प्रवणो मार्ग इति विवेकः तथा यजतो यष्टव्यः स देवः शुभ्राभ्याम् श्वेताभ्याम् हरिभ्यामश्वाभ्याम् याति। देवयजनदेशे गच्छति। सविता देवो विश्वा दुरिता सर्व्वाणि पापान्यपबाधमानो विनाशयन् परावतो दूरदेशात्। परा-वत इति दूरनामसु पठितत्वात्। तादृशाद्दुरालोकादा याति। यागदेश आगच्छति। प्रवता। वन षण संभक्तौ।

अस्मात्प्रपूर्व्वात् क्विप्। गमादीनामिति व्यक्तव्यम्। पा० ६।४।४०।१। इत्यनुनासिकलोपः। ततस्तुक्। क्कदुत्तरपदप्रकृतिस्वरत्वम्। उद्दता। उत्पूर्वाद्दनतेः पूर्ववत् प्रक्रिया। यजतः भृमृदृशीत्यादिना उ० ३।११०। यजतेः कर्म्मख्यतच् प्रतयः। विश्वा दुरिता। उभयत्र शेश्छन्दसि बहुलमिति शेर्लोपः।

४। सविता रथमास्थात्। आ तवान्। आरूढवानित्यर्थः। कीदृशम् अभीवृतम् अभितो वर्त्तमानम्। तथा कृशनैर्विश्वरूप सुवर्णेन नानारूपम्। कृशनं लोहमिति सुवर्णनामसु पाठात्। क्वचित् सुवर्णनिर्म्मितगजपंक्तिः क्वचिदश्वपङ्क्तिः क्वचिन्मनुष्यपङ्क्तिरित्येव बहुरूपत्वम्। हिरण्यशम्यम्। अश्वाना स्कन्धेषु रथयोजनवेलाया नियन्तुं प्रक्षेप्यमाणाः शङ्कवः शम्याः। ताः सुवर्णमय्यो रथे वर्त्तन्ते। बृहन्तं प्रौढ़म्। कीदृशः सविता। यजतो यष्टव्यः। चित्रभानुर्विविधरश्मियुक्तः। कृष्णा रजांस्यन्धकारयुक्ततया कृष्णवर्णान् लोकानुद्दिश्य तमोनिवारणार्थं तविषीं बल स्वकीयं प्रकाशरूपं दधानः। अभीवृतम् अभितो वर्त्तत इत्यभीवृत्। वृतु वर्त्तने। क्विपि नहिवृतीत्यादिना पा० ६।३।११६। पूर्व्वपदस्य दीर्घत्वम्। विश्वरूपं विश्वानि रूपाणि यस्यासौ विश्वरूपः। बहुव्रीहौ विश्वं संज्ञायामिति व्यत्य-

येनासंज्ञायामपि पूर्वपदान्तोदात्तत्वम्। हिरण्ययम्यम्। हर्य गतिकान्त्योः। हर्यतेः कन्यन् हिर च। उ० ५।४४। इति कन्यन् प्रत्ययो धातो र्हिरादेशश्च। नित्वादाद्युदात्तत्वम्। बहुव्रीहौ पूर्व्वपदप्रकृतिस्वरत्वम्। आस्थात् तिष्ठते र्लुङि गातिस्थेति सिचोलुक्। कृष्णा कृषेर्वर्णे, उ० ३।४ इति नक्प्रत्ययः। शेश्छन्दसि बहुलमिति शेर्लोपः। तविषीं तवतिः सौत्रधातुः तवेर्णिद्वा। उ० १।४८ इति टिषच्। टित्वाट्टिड्ढाणञित्यादिना ङीप्। व्यत्ययेनाद्युदात्तत्व वृषादित्वाद्द्रष्टव्यम्। दधानः शानच्यभ्यस्तानामादिरित्याद्युदात्तत्वम्

५। श्यावा एतन्नामकाः सूर्य्यस्याश्वाः। श्यावाः सवितुरिति निघण्टावुक्तत्वात्। ते च शितिपादः श्वेतैः पादैरुपेताः। हिरण्यप्रउगम्। रथस्य मुखमीषयोरग्रं युगबन्धनस्थानं प्रउगमित्युच्यते। तच्चात्र सुवर्णमयम्। तद्युक्तं रथं वहन्तो जनान् प्राणिनो व्यख्यन्। विशेषेण प्रकाशितवन्त इत्यर्थः। शश्वत् सर्व्वदा विशः प्रजाः दैव्यस्येतरदेवसम्बन्धिनः सवितुः प्रेरकस्य सूर्य्यस्योपस्थे समीपस्थाने तस्थुः। स्थितवत्यः। न केवलं प्रजाः किं तर्हि विश्वा भुवनानि सर्व्वे च लोकाः प्रकाशाय सूर्य्यसमीपे तस्थुः। शितिपादः शितयः श्वेतवर्णाः पादा येषां ते। शितिपादाः। सुपां

सुलुगिति इति जसः सु आदेशः। यद्वा शितिः श्वेतवर्णः स्फाटिकादिः स इव पादो येषां ते। पादस्य लोपोऽहस्त्यादिभ्यः। पा० ५।४।१३८। इति समासान्तपादशब्दस्यान्त्यलोपः। उपमानादिति हि तत्रानुवर्त्तते। पादशब्दस्य वृषादित्वादाद्युदात्तत्वम्। तस्य बहुव्रीहौ समासे शितेर्नित्या बह्वज्बहुव्रीहावभसत्। पा० ६।२।१३८। इत्युत्तरपदप्रकृतिस्वरत्वम्। अख्यन् ख्यातेर्लुङि अस्यतिवक्ति इत्यादिना च्लेरङादेशः। हिरण्यप्रउग। बहुव्रीहौ पूर्व्वपदप्रकृतिस्वरत्वम्। वहन्तः। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः। दैव्यस्य तस्येदमित्यर्थे देवाद्यञञौ। पा० ४।१।८५।३ इति देवशब्दात् प्राग्दीव्यतीयो यञ्। तद्धितेष्वचामादेरित्यादिवृद्धिः। ञ्नित्यादिर्नित्य मित्याद्युदात्तत्वम्। उपस्थे आतश्चोपसर्गे इति कः। आतो लोप इटिचेत्याकारलोपः। मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम्।

६। द्यावः स्वर्गोपलचिताः प्रकाशमाना लोकास्तिस्त्रस्त्रिसंख्याकाः सन्ति। तत्र द्वौ लोकौ सवितुः सूर्य्यस्योपस्था समीपस्थाने वर्त्तेते। द्युलोकभूलोकयोः सूर्य्येण प्रकाशितत्वात्। एका मध्यमा भूमिरन्तरिक्षलोको यमस्य भुवने पितृपतेर्गृहे विराषाट् विराम् गन्तॄन् सहते। प्रेताः पुरुषाः अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः अमृता-

मृतानि चन्द्रनक्षत्रादीनि ज्योतींषि जलानि वाधि तस्थुः। सवितारमधिगम्य स्थितानि। तत्र दृष्टान्तः। रथ्यमाणिं न। रथाद्बहिरक्षच्छिद्रे प्रक्षिप्तः कीलविशेष आणिरित्युच्यते। रथसम्बन्धिनमाणिमधिगम्य यथा रथस्तिष्ठति तद्वत्। यस्तु मानवस्तत्सवितृरूपं चिकेतत् जानाति स मानव इहास्मिन्विषये ब्रवीतु। कथयतु। केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः। तिस्रः तिसृभ्यो जसः। पा० ६।१।१६६। इति विभक्तेरुदात्तत्वम्। द्वौ संहितायामावादेशे लोपः शाकल्यस्येति वकारलोपः। उपस्था आङ्याजयाराम् चोपसंख्यानम्। म० ७।१।३९। इति सप्तम्या आङादेशः। आङोऽनुनासिकश्छन्दसि। पा० ६।१।१२६। इति प्रकृतिभावः। विराषाट् वृञ् वरणे। घञर्थे कविधानम् पा० ३।३।५८।४ इति कर्मणि कः। बहुलं छन्दसि पा० ७।१।१०३। इतीत्वम्। तथा सति वूर्यन्त इति विरा इत्युक्तं भवति। तान् सहत इति विराषाट्। छन्दसि सहः पाः ३।२।६३ इति सहेर्ण्विः। सहेः साडः। पाः ८।३।५६। इति षत्वम्। अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घः। रथ्यं रथस्येदं रथ्यं रथाद्यत्। पा० ४।३।१२१। इति यत्। यतोऽनाव इत्याद्युदात्तत्वम्। अमृता शेश्छन्दसि बहुलमिति शेर्लोपः। चिकेतत्। कित ज्ञाने। लेट्यडागमः

इतश्च लोपः इतीकारलोपः। जुहोत्यादित्वात् श्लुः। लघूपधगुणः। अनुदात्ते च। पा० ६।१।१९० । इत्यभ्यस्तस्याद्युदात्तत्वम्। यद्वृत्तयोगादनिघातः।

७। सुपर्णः शोभनपतनः सूर्यस्य रश्मिः। सुपर्णा इति पञ्चदश रश्मिनामानीति तन्नामसु पठितत्वात्। अन्तरिक्षाण्यन्तरिक्षोपलक्षितानि लोकत्रयस्थानानि व्यख्यत्। विशेषेण ख्यापितवान् प्रकाशितवान्। कीदृशो रश्मिः गभीरवेपा गभीरकम्पनः। रश्मेः प्रकम्पनम् चलनम् केनापि द्रष्टुमशक्यमित्यर्थः। असुरः सर्वेषा प्राणदः। तथा चान्यत्राम्नायते। सर्वेषाम् भूतानाम् प्राणानादायोदेतीति। सुनीथः सुनयनः शोभनप्रापणः। मार्गप्रकाशनेनाभीष्टदेशं प्रापयतीत्यर्थः। तादृशरश्मियुक्तः सूर्य इदानीं रात्रौ क्व कुत्र वर्त्तते तदेतद्रहस्यं कश्चिकेत। को जानाति। न कोऽपीत्यर्थः। अस्य सूर्यस्य रश्मिः कतमां द्यामा ततान कं द्युलोकं रात्रौ व्याप्तवान्। एतदपि को जानाति। सुपर्णः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। गभीरवेपाः टुवेपृ कम्पने। असुन्। गभीरम् वेपो यस्य। पूर्वपदप्रकृतिस्वरत्वम्। असुरः असु क्षेपणे अस्यति शत्रूनित्यसुरः। असेरुरन्। उ० १।४२ नित्वादाद्युदात्तत्वम्। यद्वा। असून् प्राणान्राति ददातीत्यसुरः। आतोऽनुपसर्गे क इति कप्रत्ययः। सुनीथः।

णीञ् प्रापणे । हनिकुषिनीरमिकाशिभ्यः क्थन् । उ० २।२ । इति क्थन् । प्रादिसमासे थाथादिनोत्तरपदान्तोदात्तत्वम् । इदानीं इदं शब्दात् सप्तम्यर्थे दानीं च । पा० ५।३।१८। इति दानीं प्रत्ययः । इदम इशितीदशब्दस्येशादेशः । प्रत्ययाद्युदात्तत्वम् । सूर्यः । षू प्रेरणे । सुवतीति सूर्यः राजसूयसूर्येत्यादिना रुडागमसहितः क्यप्रत्ययो निपातितः । प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । चिकेत । कित ज्ञाने । लिट् । कतमां । किंजातीयाम् । वा बहूनाम् जातिपरिप्रश्ने डतमच् । पा० ५।३।९३ । इति किंशब्दात् डतमच् । डित्वाट्टिलोपः । चित इत्यन्तोदात्तत्वम् ।

८ । पृथिव्याः सम्बन्धिनीरष्टौ ककुभः प्राच्याद्याश्चतस्रो दिशः आग्नेय्याद्याश्चतस्रो विदिशः इत्येवमष्टौ दिशो व्यख्यत् । सविता प्रकाशितवान् । तथा योजना प्राणिनः स्वस्वभोगेन योजयितृन्धन्व अन्तरिक्षोपलक्षितान् त्री त्रि-संख्याकान् पृथिव्यादिलोकान् सप्त सिन्धून् गङ्गादिनदीः समुद्रान्वा सविता व्यख्यत् । हिरण्याक्षः हितरमणीयचक्षुर्युक्तो हिरण्मयाक्षो वा सविता देव आगात् । इहागच्छतु । किं कुर्वन् दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि रत्नानि दधत् । प्रयच्छन् । अख्यत् । ख्यातेर्लुङ्यस्यतिवक्तीत्या-

दिना च्लेरङादेशः। त्वौ शेश्छन्दसि बहुलमिति शेर्लोपः। धन्व। रिविरविधवि गत्यर्थाः। इदितो नुम् धातोरिति नुम्। अस्मात् कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति कनिन्। सुपां सुलुगिति विभक्तेर्लुक्। नलोपः। प्रत्ययस्य नित्वादाद्युदात्तत्वम्। योजना योजयन्ति प्राणिन उपभोगेनेति योजनानि। नंद्यादिलक्षणो ल्युः। णेरनिटीतिणिलोप पूर्व्ववच्छेर्लोपः। हिरण्याक्षः हिरण्यमयान्यक्षीणि यस्यासौ हिरण्याक्षः। बहुव्रीहौ सक्थ्यक्ष्णोः। पा० ५।४।११३। इति समासान्तः षच्प्रत्ययः। अगात् एते र्लुङीणो गा लुङि। पा० २।४।४५। इति गादेशः। गातिस्थेति सिचो लुक्। दधत्। शतरि नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः। श्नाभ्यस्तयोरात इत्याकारलोपः। अभ्यस्तानामादिरित्याद्युदात्तत्वम्। दाशुषे दाश्वान् साह्वानित्यादिना क्वसुप्रत्ययान्तो निपातितः। चतुर्थ्येकवचने वसोः सम्प्रसारणमिति सम्प्रसारणम्। परपूर्व्वत्वम्। शासिवसिघसीनाम् चेति षत्वम्। वार्य्याणि वृङ् सम्भक्तौ। ऋहलोर्ण्यत्। इडवन्देत्यादिनाद्युदात्तत्वम्।

९। हिरण्यपाणिः सुवर्णमयहस्तयुक्तः। यद्वा यजमानेभ्यो दातुम् हिरण्यं हस्ते धृतवान्। विचर्षणिर्विविधदर्शनयुक्तः। विचर्षणिः पश्यत्यर्थः। विचर्षणिर्विश्वचर्षणि-

रिति तन्नामसु पाठात्। सविता देव उभे द्यावापृथिवी अन्तः उभयोर्लोकयोर्मध्य ईयते। गच्छति। अमीवां रोगादिबाधामप बाधते। सम्यग्निराकरोति। तथा सूर्यं वेति गच्छति। यद्यपि सवितृसूर्ययो रेकदेवतात्वम्, तथापि मूर्त्तिभेदेन गन्तृगन्तव्यभावः। कृष्णेन तमसः कर्षकेण निवर्त्तकेन रजसा तेजसा द्यामाकाशमभ्यृणोति। सर्व्वतो व्याप्नोति। द्यावापृथिवी। दिवसश्च पृथिव्याम् पा० ६।३।३०। इति चशब्दाद्दिवशब्दस्य द्यावादेशः। देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम्। नोत्तरपदेऽनुदात्तादौ। पा० ६।२।१४२। इति न निषेधः। अपृथिवीरुद्रपूषमन्थिष्विति पर्य्युदस्तत्वात्। ईयते। ईङ् गतौ। तिङ्ङतिङ इति निघातः। बाधते। बाधते च वेति चेति समुच्चयार्थप्रतीतेश्चशब्दस्याप्रयोगाच्चादिलोपे विभाषेति निघातप्रतिषेधः। वेति वी गतिप्रजनकान्त्यशनखादनेषु। अदादित्वाच्छपो लुक्। तिपः पित्वादनुदात्तत्वे धातुस्वरः। यद्यप्येषा द्वितीया तथापि तिङः परत्वान्निघाताभावः। ऋणोति ऋणु गतौ। तनादित्वादुः। तनादिषु करोतेरेव गुणो नान्येषामित्यापिशलिमतेन गुणाभावः।

१०। हिरण्यहस्तोऽसुरः प्राणदाता सुनीथः सुष्ठु नेता। प्रशस्य इत्यर्थः। सुनीथः पाक इति प्रशस्यनामसु

पाठात्। सुमृळीकः सुष्ठु सुखयिता स्ववान् धनवान् अर्वाङ् अभिमुखः कर्म्मदेशे गच्छतु। किं चायं देवः प्रतिदोषं प्रतिरात्रि गृणानः स्तूयमानोऽस्थात्। स्थितवान्। किं कुर्व्वन्। रक्षसो बाधकत्वेन रक्षणनिमित्तभूतान्। रक्षो रक्षितव्यमस्मादिति यास्कः। नि० ४।१८। यातुधानानसुरानपसेधन् निराकुर्व्वन्। हिरण्यहस्तादयो गताः। सुमृळीकः सुष्ठु मृळीक सुखं यस्यासौ तथोक्तः। नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। स्ववान्। स्वमस्यास्तीति स्ववान्। मादुपधाया इति वत्वम्। संहितायां नकारस्य दीर्घादटि समानपाद इति रुत्वम्। आतोऽटि नित्यमिति सानुनासिक आकारः। रोर्यत्वम्। यलोपश्च। अपसेधन्। षिधु गत्याम्। शपः पित्वादनुदात्तत्वम्। शतुश्च लसार्व्वधातुकस्वरेण कृदुत्तरपदप्रकृतिस्वरत्वम्। रक्षसः। रक्ष पालन इत्यस्मादपादान औणादिकोऽसिप्रत्ययः। यद्वा रक्षन्त्यनेनेति रक्षो बलम्। करणेऽसुन्। तदेषामस्तीति रक्षस्विनः। मत्वर्थप्रत्ययलोपश्छान्दसः। प्रत्ययस्वरः। यातुधानान्। यत निकारोपसंस्कारयोः। तस्माण्ण्यन्तादौणादिको भाव उप्रत्ययः। यातवो यातना एषु धीयन्त इति यातुधानाः। अधिकरणे ल्युट्। लितीति प्रत्ययात् पूर्व्वस्योदात्तत्वम्। अस्थात्। गातिस्थेति सिचो

लुक्। प्रतिदोषम्। दोषा दोषाम्। प्रति वीप्सालक्षणे यथार्थे अव्ययीभावः। गृणानः। गृशब्दे। कर्म्मणि लटः शानच्। व्यत्ययेन श्ना। प्वादीनाम् ह्रस्व इति ह्रस्वत्वम्। चित इत्यन्तोदात्तत्वम्।

११। हे सवितः ते तव पन्था मार्गाः पूर्व्यासः पूर्व्वै सिद्धा अरेणवो धूलिरहिता अन्तरिक्षे सुकृताः सुष्ठु सम्पादिताः। सुगेभिः सुष्ठु गन्तुं शक्यैस्तेभिः पथिभिस्तैर्मार्गैरागत्याद्यास्मिन्दिने नोऽस्मान्रक्ष च। पालनमपि कुरु। तथा हे देव नोऽस्माननुष्ठातॄनधि ब्रूहि च। देवानामग्रेऽधिकत्वेन कथय च। पन्थाः। सुपा सुलुगिति जसः सुः। पथिमथोः सर्व्वनामस्थान इत्याद्युदात्तत्वम्। पूर्व्यासः। पूर्वैः कृताः पूर्व्याः। पूर्वैः कृतमिनियौ च। पा० ४।४।१३३ इति यः। प्रत्ययस्वरः। असुगागमः। अरेणवः। नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। सुकृताः। कर्म्मणि क्तः। गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्। सुगेभिः। सुष्ठु गच्छन्त्येष्विति सुगाः। सुदुरोरधिकरणे। पा० ३।२।४८।३ इति गमेर्डप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। रक्ष। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः।

---

# MARUTAS I. 85.

१। चतुर्दशेऽनुवाके नव सूक्तानि। तत्र प्र य इति द्वादशर्चं प्रथमं सूक्तं गौतमस्यार्षम्। पञ्चमीद्वादश्यौ त्रिष्टुभौ। शिष्टा जगत्यः। मरुतो देवता। तथा चानुक्रान्तं। प्र ये द्वादश मारुतम् ह पञ्चम्यन्त्ये त्रिष्टुभाविति। हशब्दप्रयोगादिदमादीनि चत्वारि सूक्तानि मरुद्देवत्यानि। अभिप्लवषडहस्य चतुर्थेऽहन्याग्निमारुत एतत्सूक्तं मारुतनिविद्धानीयम्। सूचितं च। प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतम्। ये मरुतो यामन् यामनि गमने निमित्तभूते सति प्रशुम्भन्ते। प्रकर्षेण स्वकीयान्यङ्गान्यलङ्कुर्वन्ति। जनयो न। जाया इव। यथा योषितः स्वकीन्यङ्गान्यलङ्कुर्वन्ति तद्वत्। कीदृशाः मरुतः। सप्तयः सर्पणशीलाः। रुद्रस्य सूनवः। रोदयति सर्वमन्तकाल इति रुद्रः परमेश्वरः। तस्य पुत्राः। सुदंससः। शोभनकर्माणः। एतदेवोपपादयति। हि यस्मात् मरुतो रोदसी द्यावापृथिव्यौ वृधे वृष्टिप्रदानादिना वर्धनाय चक्रिरे कृतवन्तः। अतः सुदंसस इत्यर्थः। वीरा विशेषेण शत्रुक्षेपणशीलाः। वृष्वयः। वर्षणशीलाः। मद्दीरुद्दशिलो-

भयादेर्भञ्जका इत्यर्थः। एवम्भूतास्ते मरुतो विदथेषु। विदन्त्येषु यष्टव्यतया देवानिति विदथा यज्ञाः। तेषु मदन्ति। सोमपानेन हृष्यन्ति। शुम्भन्ते। शुभशुम्भ दीप्तौ। भौवादिकः। जनयः। जायन्त आस्वपत्यानीति जनयो जायाः। इन् सर्वधातुभ्य इतीन् प्रत्ययः। यामन् या प्रापणे। कृत्यल्युटो बहुलमिति बहुलवचनादातो मनिन्निति भावे मनिन्। सुपा सुलुगिति सप्तम्या लुक्। सुदंसस·। दंस इति कर्म्मनाम। शोभनं दंसो येषाम्। सोर्म्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वम्। चक्रिरे। हि चेति निघातप्रतिषेधः। वृधे। वृधु वृद्धौ। सम्पदादिलक्षणो भावे क्विप्। सावेकाच इति विभक्तेरुदात्तत्वम्। मदन्ति। मदी हर्षे। श्यनि प्राप्ते व्यत्ययेन शप्। पादादित्वान्निघाताभावः। विदथेषु। विद ज्ञाने। रुविदिभ्याम् किदित्यथप्रत्ययः। धृष्वयः। धृषु सघर्षे। कृवृधृष्वीत्यादिना विन्प्रत्ययान्तो निपात्यते।

२। ये पूर्व्वोक्तगुणविशिष्टास्ते मरुत उक्षितासो देवैरभिषिक्ताः सन्तो महिमानं महत्त्वमाशत। आप्नुवन्। रुद्रासो रुद्रस्य पुत्राः। उपचाराज्जन्ये जनकशब्दः। ते रुद्रपुत्रा मरुतो दिवि द्योतमाने नभसि सदः सदनं स्थानमधि चक्रिरे। अधिकं सर्वोत्कृष्टं कृतवन्तः। अर्कमर्च्चनीय-

मिन्द्रमर्चन्तः पूजयन्त इन्द्रियमिन्द्रस्य लिङ्गं वीर्य्यं जनयन्तः। प्रहर भगवो जहि वीरयस्वेत्येवंरूपेण वाक्येनोत्पादयन्तः। पृश्निमातरः पृश्नेर्नानारूपाया भूमेः पुत्रा मरुतः श्रिय ऐश्वर्य्याण्यधि दधिरे। आधिक्येनाधारयन्। उक्षिताशः। उक्ष सेचने। कर्म्मणि निष्ठा। आज्जसेरसुक्। महिमानम्। महच्छब्दात् पृथ्वादिलक्षण इमनिच्। टेरिति टिलोपः। आशत। अशू व्याप्तौ। लङि बहुल छन्दसीति विकरणस्य लुक्। इन्द्रियम्। इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिति घच्-प्रत्ययान्तो निपात्यते। पृश्निमातरः। प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमिः। श्रूयते च। इयं वै पृश्निः। घृणि-पृश्निरित्यादौ निपातनादभिमतरूपसिद्धिः पृश्निर्माता येषां ते तथोक्ताः। ऋतश्छन्दसि। पा० ५।४।१५८। इति समासान्तस्य कपः प्रतिषेधः।

२। गोमातरः। गोरूपा भूमिर्माता येषां ते मरुतः। अञ्जिभीरूपाभिव्यञ्जकैराभरणै र्यद्यदा शुभयन्ते। स्वकीया-न्यङ्गानि शोभायुक्तानि कुर्वन्ति। तदानीं शुभ्रा दीप्ता मरुतस्तनूषु स्वकीयेषु शरीरेषु विरुक्मतो विशेषेण रोच-मानानलङ्कारान्दधिरे। धारयन्ति। अपि च विश्वं सर्व-मभिमातिनं शत्रुमप बाधन्ते। हिंसन्ति। एषां मरुतां वर्त्मानि मार्गाननुसृत्य घृतं क्षरणशीलमुदकं रीयते।

स्रवति। यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः। शुभयन्ते। सन्नापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः। अञ्जिभिः। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। खनिकसिकष्यञ्ज्यसिवसिध्वनिस्तनिसनिग्रन्थिचरिभ्यश्चेतीप्रत्ययः। शुभ्राः। शुभ दीप्तौ। स्फायितञ्चीत्यादिना रक्। विरुक्मतः। विशिष्टा रुक् विरुक्। तद्वन्तो विरुक्मन्तः। मतुप्प्ययस्मयादित्वेन पदत्वात् कुत्वम्। भत्वात् जश्त्वाभावः। रीयते। रीङ् स्रवणे। दैवादिकः।

४। सुमखासः शोभनयज्ञा ये मरुत ऋष्टिभिरायुधैर्वि भ्राजन्ते विशेषेण दीप्यन्ते। ते मरुतोऽच्युता चित् च्यावयितुमशक्यानि दृढ़ानि पर्व्वतादीन्यप्योजसा स्वकीयेन बलेन प्रच्यावयन्तः प्रकर्षेण च्यावयितारः प्रेरयितारो भवन्ति। उत्तरार्द्धः प्रत्यक्षकृतः। हे मरुतः। मनोजुवो मनोवद्वेगगतयो वृषव्रातासो वृष्ट्युदकसेचनसमर्थसमसङ्घात्मका यूयं रथेष्वात्मीयेषु। पृषतीः पृषत्य इति मरुद्वाहनानां संज्ञा, पृषत्यो मरुतामित्युक्तत्वात्। पृषद्भिः श्वेतविन्दुभिर्युक्ता मृगीर्यद्यदायुग्ध्वम्। आभिमुख्येन नियुक्ता अकृढ्वम्। तदानीं पर्वतादिकं प्रच्यवत इत्यर्थः। सुमखासः। सर्वे विधयश्छन्दसि विकल्प्यन्त इति नञ्सुभ्यामित्यस्य प्रवृत्त्यभावे बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अच्युता। शेश्छन्दसि

बहुलमिति शेर्लोपः। मनोजुवः। जु इति सौत्रो धातुर्गत्यर्थः। क्विव्वचीत्यादिना क्विब्दीर्घौ। अयुग्ध्वम्। युजिर् योगे। लुङि धि चेति सकारलोपः।

५। हे मरुतः पृषतीर्यद्यदा रथेषु प्रायुग्ध्वम्। प्रायूयुजत। किं कुर्वन्तः। वाजेऽन्ने निमित्तभूते सत्यद्रिं मेघं रंहयन्तः। वर्षणार्थं प्रेरयन्तः। उत तदानीमरुषस्यारोचमानस्य सूर्य्यस्य वैद्युताग्नेर्वा सकाशाद्दृष्टुरुदकधारा भवन्तो विष्यन्ति। विमुञ्चन्ति। विमुक्तास्ताश्च धारा उदभिरुदकैश्चर्मेव परिमितमल्पं चर्म्म यथाप्रयत्नेन क्लेद्यते। एवं भूम सर्वां भूमिं व्युन्दन्ति। विशेषेणार्द्रां कुर्वन्ति। रंहयन्तः। रहि गतौ। वि ष्यन्ति। षो अन्तकर्म्मणि। दैवादिकः। ओतः श्यनि। पा० ७।३।७१। इत्योकारलोपः। उपसर्गात्सुनोतीति षत्वम्। उदभिः। पद्दन्नित्यादिनोदकशब्दस्योदन्नादेशः। व्युन्दन्ति। उन्दी क्लेदने। भूम। सुपां सुलुगिति भूमिशब्दादुत्तरस्यामो डादेशः। छान्दसं ह्रस्वत्वम्।

६। तृतीयसवन आ वो वहन्त्विति पोतुः प्रस्थितयाज्या। सूत्रितं च। आवो वहन्तु सप्तयो रघुष्यदोऽमेव नः सुहवा आ हि गन्तन। आ ५।५ इति। तामेतां सूक्ते षष्ठीमृचमाह। हे मरुतो वो युष्मान् सप्तयः सर्पणशीला अश्वा आवहन्तु। अस्मदयज्ञं प्रापयन्तु। कीदृशाः सप्तयः। रघुष्यदः।

लघु शीघ्रं स्यन्दमानाः । वेगेन गच्छन्त इत्यर्थः । रघुपत्वानो लघु शीघ्रं पतन्तो गच्छन्तो यूयं बाहुभिः स्वकीयैर्हस्तैरस्मभ्यं दातव्य धनमाहृत्य प्रजिगात । प्रकर्षेण गच्छत । हे मरुतो वो युष्माकं सदः सदनं वेदिलक्षणं स्थानमुरु विस्तीर्णं कृतम् । तत्र यदास्तीर्णं बर्हिस्तदा सीदत । तस्मिन्बर्हिष्युपविशत । उपविश्य च मध्वो मधुरस्यान्धसः सोमलक्षणस्यान्नस्य पानेन मादयध्वम् । तृप्ता भवत । रघुष्यदः । रघु स्यन्दत इति ष्यन्दू प्रस्रवणे । क्विप् चेति क्विप् । अनिदितामिति नलोपः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रघुपत्वानः पतृ गतौ । अन्येभ्योऽपि दृश्यन्त इति वनिप् । जिगात । गा स्तुतौ । जौहोत्यादिकः । जिगातीति गतिकर्मसु पाठादत्र गत्यर्थः । लोण्मध्यमबहुवचनस्य तप्तनप्तनथनाश्चेति तबादेशः । तस्य पित्त्वेन ङित्त्वाभावादीहल्यघोरितीत्वाभावः । सदः । अतः कृकमीति विसर्जनीयस्य सत्वम् । मादयध्वम् । मद तृप्तियोगे । चुरादिरात्मनेपदी ।

७ । ते मरुतोऽवर्द्धन्त । वृद्धिं गताः । कीदृशाः । स्वतवसः स्वाश्रयबलाः । नान्यस्य कस्यचिद्बलमपेक्षन्ते । वृद्धिं प्राप्य च महित्वना महिम्ना महत्त्वेन नाकं स्वर्गमातस्थुः । आस्थितवन्तः । सदः सदनं नभोलक्षणं स्थानं च स्वकीयनिवासायोरु विस्तीर्णं चक्रिरे । यत् येभ्यो

मरुद्भ्यः। यदर्थं वृषणं कामाभिवर्षकं मदच्युतं मदस्य हर्षस्यासेक्तारं यज्ञं विष्णुर्ह्यावत्। विष्णुरेवागत्य रक्षति। ते मरुतो वयो न पक्षिणो यथा शीघ्रमागच्छन्ति एवं शीघ्रमागत्य बर्हिष्यध्यस्मदीये यज्ञे प्रिये प्रीतिकरे सीदन्। सीदन्तु। उपविशन्तु। तेऽवर्द्धन्त। स्वरितो वानुदात्ते पदादौ। पा० ८।२।६ इत्येकादेशस्य स्वरितत्वम्। महित्वना। भावप्रत्ययादुत्तरस्याङो व्यत्ययेन नाभाव उदात्तत्वं च। यद्वा सुपां सुलुगित्याजादेशो नकारोपजनश्च। तस्थुः नाकमातस्थुश्च सदश्च विस्तीर्णं चक्रिर इति चार्थप्रतीतेश्चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। यत्। सुपां सुलुगिति चतुर्थ्या लुक्। आवत् छान्दसो वर्त्तमाने लङ्। वृषणम्। वा सपूर्व्वस्य निगम इत्युपधादीर्घाभावः। मदच्युतम्। मदं च्योततीति मदच्युत्। च्युतिर आसेचने क्विप्। सीदन्। लिङर्थे लेट्यडागमः।

८। इदित्येतत्समुच्चये। शूरा इवेत् शौर्य्योपेता युयुत्सवः पुरुषा इव च युयुधयः शत्रुभिर्य्युध्यमानाः पुरुषा इव च जग्मयः शीघ्रं गच्छन्तो मरुतः श्रवस्यवो न श्रवोऽन्नमात्मन इच्छन्तः पुरुषा इव पृतनासु संग्रामेषु येतिरे। प्रयतन्ते वृत्रादिभिर्य्युद्धे व्याप्रियन्ते। तादृशेभ्यो मरुद्भ्यो विश्वा भुवना सर्व्वाणि भूतजातानि भयन्ते। बिभ्यति। ये

नरो वृष्ट्यादेर्नेतारो मरुतो राजान इव राजमाना नृपतय इव त्वेषसन्दृशो दीप्तसन्दर्शना उग्ररूपतया द्रष्टुमशक्या भवन्ति। तेभ्य इत्यर्थः। युयुधयः। युध सम्प्रहारे। आदृगमहनजन इत्यत्रोत्सर्गश्छन्दसीति वचनात् किन्प्रत्ययः। लिङ्वद्भावाद्द्विर्भावादि। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तत्वम्। जग्मयः। तेनैव सूत्रेण किन्प्रत्ययः। गमहनेत्यादिनोपधालोपः। स्थानिवद्भावाद् द्विर्भावादि। श्रवस्यवः। श्रव इच्छति श्रवस्यति। क्याच्छन्दसीत्युप्रत्ययः। येतिरे। यतो प्रयत्ने। छन्दसि लुङ्लङ्लिट इति वर्त्तमाने लिट्। भयन्ते। ञिभी भये। बहुलं छन्दसीति शपः श्लोरभावः। त्वेषसन्दृशः। त्विष दीप्तौ। पचाद्यच्। दृशिर् प्रेक्षणे। सम्पूर्वाद्दस्मात्सम्पदादिलक्षणो भावे क्विप्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्।

८। स्वपाः शोभनकर्म्मा त्वष्टा विश्वनिर्म्माता यद्वज्रमवर्त्तयत्। इन्द्र प्रत्यगमयत्। दत्तवानित्यर्थः। कीदृशम्। सुकृतम्। सम्यक् निष्पादितम्। हिरण्ययम्। सुवर्णमयम्। सहस्रभृष्टिम्। अनेकाभिर्धाराभिर्युक्तम्। तद्वज्रमिन्द्रो धत्ते। धारयति। किमर्थम्। नरि। अत्र नृसम्बन्धान्नृशब्देन सग्रामोऽभिधीयते। संग्रामेऽपांसि शत्रुहननादिलक्षणानि कर्म्माणि कर्त्तवे कर्त्तुम्। एवं वज्रं धृत्वा तेन वज्रेण

वृत्रं वृष्ट्युदकस्यावरकमर्णवमर्णसोदकेन युक्तं मेघमघ्नन् अवधीत्। अपां तेन निरुद्धा अपश्च स निरौब्जत्। निःशेषेणाधोमुखमपातयत् प्रवृष्टा अकरोदित्यर्थः। सुकृतम्। सुपूर्वात्करोतेः कर्मणि निष्ठा। गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्। हिरण्ययम्। हिरण्यशब्दादुत्तरस्य मयटो मकारस्य लोप ऋत्व्यवास्त्वावास्त्वेत्यादौ निपात्यते। स्वपाः सोर्मनसो अलोमोषसी इत्युत्तरपदाद्युदात्तत्वम। कर्त्तवे तु-मर्थे सेसेनिति करोतेस्तवेन् प्रत्ययः। अपाम्। क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। ऊडिद-मिति विभक्तेरुदात्तत्वम। औब्जत्। उब्ज आर्जवे। अर्णवम्। अर्णसो लोपश्चेति मत्वर्थीयो वः सलोपश्च।

१०। अत्रेयमाख्यायिका। गोतम ऋषिः पिपासया पीड़ितः सन् मरुत उदकं ययाचे तदनन्तरं मरुतोऽदूरस्थं कूप-मुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषि-समीपे कूपमवस्थाप्य तत्पार्श्वे आहावं च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयाञ्चक्रुः। अयमर्थोऽनयोत्त-रया च प्रतिपाद्यते। ते मरुतोऽवतम्। अवस्तात्ततो भवतीत्य-वतः कूपः कूपनामसु चावतोऽवट इति पठितम्। तमूर्ध्वमु-परि यथा भवति तथौजसा स्वकीयेन बलेन नुनुद्रे प्रेरितवन्त उत्खातवन्त इत्यर्थः एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयन्तो

मरुतो मार्गमध्ये दहहाणं प्रवृद्धं गतिनिरोधकं पर्वतं चित् पर्ववन्तं शिलोच्चयमपि वि विभिदुः। विशेषेण बभञ्जुः। सुदानव.। शोभनदानास्ते मरुतो वाणं शतसंख्याभिस्तन्त्रीभिर्युक्तं वीणाविशेषं धमन्तो वादयन्तः सोमस्य मदे सोमपानेन हर्षे सति रण्यानि सुत्यानि रमणीयानि धनानि चक्रिरे। स्तोतृभ्यः कुर्वन्ति। नुनुद्रे। णुद प्रेरणे। लिटोरयो र इति रे आदेशः। दहहाणम्। दृह दृहि वृद्धौ। लिटः कानच्। धमन्तः। ध्मा शब्दाग्निसंयोगयोः। पाघ्रेत्यादिना धमादेशः। वाणम्। अण रण वण शब्दार्थाः। कर्मणि घञ्। कर्षात्वत इत्यन्तोदात्तत्वम्। रण्यानि। रणतेर्भावे वसिरण्योरुपसंख्यानम्। पा० ३।३।५८।२। इत्यप्। ततो भवे च्छन्दसीति यत्। यतोऽनाव इत्याद्युदात्तत्वम्।

११। मरुतोऽवतमुद्धृतं कूपं यस्यां दिशि ऋषिर्वसति तया दिशा जिह्मं वक्रं तिर्यञ्चं नुनुद्रे। प्रेरितवन्तः। एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य तृष्णजे तृषिताय गोतमाय ऋषये तदर्थमुत्सं जलप्रवाहं कूपादुद्धृत्यासिञ्चन्। आहावेऽवानयन् एवं कृत्वेमं स्तोतारमृषिं चित्रभानवो विचित्रदीप्तयस्ते मरुतोऽवसेऽस्मै रक्षणेन सहागच्छन्ति। तत्समीपं प्राप्नुवन्ति प्राप्य च विप्रस्य मेधाविनो गोतमस्य काममभिलाषं धामभिरायुषो धारकैरुदकैस्तर्पयन्त। अतर्पयन्। तया। स गोश्च-

न्मावर्णेति साविकाच इति प्राप्तस्य विभक्त्युदात्तस्य प्रतिषेधः। दिशा। साविकाच इति विभक्तेरुदात्तत्वम्। तृष्णजे। ञितृषा पिपासायाम्। स्वपितृषोर्नजिङ्। प्रत्ययाद्युदात्तत्वम्। पदकारस्य शाकल्यस्य त्वयमभिप्रायः। अन्येष्वपि दृश्यत इति दृशिग्रहणात्केवलादपि जनेर्डप्रत्ययः तृष्णा जाता यस्य स तथोक्तः। ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति ह्रस्वत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। धामभिः। दधातेरातो मनिन्निति मनिन्।

१२। मारुते पशौ या वः शर्मेति हविषो याज्या। प्रदानानामिति खण्डे सूत्रितम्। अत्रा इवेद्चरमा अहेव या वः शर्म शशमानाय सन्ति। इति। हे मरुतो वो युष्माक सम्बन्धीनि यानि शर्म शर्म्माणि सुखानि गृहाणि वा कीदृशानि। त्रिधातूनि। पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि। शशमानाय युष्मान् स्तुतिभिर्भजमानाय दातुं सम्पादितानि। पूर्वोक्तलक्षणानि शर्म्माणि यानि सन्ति यानि च दाशुषे हविर्दत्तवते यजमानायाधि यच्छत अधिकं प्रयच्छथ हे मरुतः, तानि सर्व्वाणि शर्म्माणि अस्मभ्यं वि यन्त, विशेषेण प्रयच्छत। किञ्च हे वृषणः कामानां वर्षितारो मरुतो नोऽस्मभ्यं सुवीरं शोभनैर्वीरैः पुत्रादिभिर्युक्तं रयिं धनं धत्त। दत्त। या। शेश्छन्दसि बहुलमिति शेर्लोपः।

शस्म। सुपां सुलुगिति जसो लुक्। शशमानाय शश प्लुतगतौ। ताच्छीलिकश्चानश्। यच्छत। छान्दसे लङि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः। यन्त। यमेर्लोटि बहुलं छन्दसीति शपो लुक्। तप्तनप्तनथनाश्चेति तबादेशः। अतस्तस्य पित्त्वेन ङित्त्वाभावादनुदात्तोपदेशेत्यादिनानुनासिकलोपो न भवति। वृषणः। वा षपूर्वस्य निगम इत्युपधादीर्घाभावः। सुवीरम् बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वम।

---

# VISNU I. 154



विष्णो र्नु कमिति षडृचं पञ्चदशं सूक्तं दैर्घतमसं त्रैष्टुभं वैष्णवम्। अत्रानुक्रमणिका। विष्णोः षड्वैष्णवं हीति। अभिप्लवषड़हेषूक्थ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थमिदमादिसूक्तद्वयं विनियुक्तम्। स्तोमे वर्धमान इति खण्डे सूत्रितम्। विष्णो र्नु कमिति सूक्ते परो मात्रयेत्यच्छावाक इति। तथा तृतीयसवने सोमातिरेक उत्तरोत्तरसंस्थोपगन्तव्या आतिरात्रात्। ततोऽप्यतिरिक्ते तदर्थमेव शस्त्रमुपजनयितव्यम्। तत्रैतदेव सूक्तं सोमातिरेक इति खण्डे सूत्रितम्। महाँ इन्द्रो नृवद्विष्णो र्नु कमिति। आग्निमारुतशस्त्रे आद्या विनियुक्ता। अथ यथेतमिति खण्डे सूत्रितम्। विष्णो र्नु कं वीर्य्याणि प्रवोचं तन्तुं तन्वन् रजसो भानुमन्विहीति।

१ । हे नरा विष्णोर्व्यापनशीलस्य देवस्य वीर्य्याणि वीरकर्म्माणि नु कम् अतिशीघ्र प्रवोचं प्रब्रवीमि । अत्र यद्यपि नु कमिति पदद्वयं तथापि यास्केन नवोत्तराणि पदानीत्युक्तत्वात् शाखान्तर एकत्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नु कमिति पदद्वयम् । कानि तानीति तत्राह यो विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीन्यग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्म्ममे । अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः । तथाच मन्त्रान्तरं यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थ इति । तैत्तिरीयेपि योस्यां पृथिव्यामस्यायुषेत्युपक्रम्य यो द्वितीयस्यां तृतीयस्यां पृथिव्यामिति । तस्माल्लोकत्रयस्य पृथिवीशब्दवाच्यत्वम् । किं च यश्च विष्णुरुत्तरमुद्गततरमतिविस्तीर्णं सधस्थं सहस्थान लोकत्रयाश्रयभूतमन्तरिक्षम् अस्कभायत् तेषामाधारत्वेन स्तम्भितवान् । निर्म्मितवानित्यर्थः । अनेनान्तरिक्षाश्रित लोकत्रयमपि सृष्टवानित्युक्तं भवति । यद्वा । यो विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान्विममे विविध निर्म्मितवान् । रजःशब्दो लोकवाची । लोका रजांस्युच्यन्त इति यास्केनोक्तत्वात् । किं च यश्च उत्तरं उद्गततरं उत्तरभाविनं सधस्थं

सहस्थानं पुण्यकृता सहनिवासयोग्यं भूरादिलोकत्रयकम् अस्कभायत् स्कम्भितवान् । सृष्टवानित्यर्थः । स्कम्भे. स्तम्भु स्तुम्भिति विहितस्य श्नः छन्दसि शायजपीति व्यत्ययेन शायजादेशः । अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे । भूरादिलोकत्रयमित्यर्थ. । भूम्यामुपार्जितकर्मभोगार्थत्वादितरलोकाना तत्कारणत्वम् । किं च यश्चोत्तरमुत्कृष्टतर सर्वेषां लोकानामुपरिभूतम् । अपुनरावृत्तेस्तस्योत्कृष्टत्वम् । सधस्थमुपासकाना सहस्थान सत्यलोकम् अस्कभायत् स्कम्भितवान् । ध्रुव स्थापितवानित्यर्थः । किं कुर्व्वन् । त्रेधा विचक्रमाण. त्रिप्रकारं स्वसृष्टान् लोकान्विविधं क्रममाणः । विष्णोस्त्रेधा क्रमणम् इदं विष्णुर्विचक्रम इत्यादिश्रुतिषु प्रसिद्धम् । अतएव उरुगायः उरुभिर्महद्भिर्गीयमानः अतिप्रभूत गीयमानो वा । य एव कृतवान् तादृशस्य विष्णोर्वीर्य्याणि प्रवोचम् ।

२ । तृतीयसवने सोमातिरेक एव शस्त्रमुपजनयितव्यम् । तत्र प्र तदित्ययमनुरूपस्तृचः । सोमातिरेक इति खण्डे सूत्रितम् । प्र तद्विष्णुः स्तवते वीर्य्येणेति स्तोत्रियानुरूपाविति । वाजपेयेनाधिपत्यकाम इति खण्डे सूत्रितम् । प्र तत्ते अद्य शिपिविष्ट नाम प्र तद्विष्णुः स्तवते वीर्य्येणेति ।

यस्येति वक्ष्यमाणत्वात्स इत्यवगम्यते। स महानुभावो वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण स्तवते स्तूयते सर्वैः। कर्मणि व्यत्ययेन शप्। वीर्येण स्तूयमानत्वे दृष्टान्तः। मृगो न सिंहादिरिव। यथा स्वविरोधिनो मृगयिता सिंहो भीमो भीतिजनकः कुचरः कुत्सितहिंसादिकर्त्ता दुर्गमप्रदेशगन्ता वा गिरिष्ठाः पर्व्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते। अस्मिन्नर्थे निरुक्तम्। मृगो न भीमः कुचरो गिरिष्ठाः। मृग इव भीमः कुचरो गिरिष्ठाः। मृगो मार्ष्टेर्गतिकर्मणः। भीमो बिभ्यत्यस्मात्। भीष्मोऽप्येतस्मादेव। कुचर इति चरति कर्म कुत्सितम्। अथ चेद्देवताभिधानं क्वायं न चरतीति वा। गिरिष्ठाः गिरिस्थायी। गिरिः पर्व्वतः समुद्गीर्णो भवति। पर्व्ववान् पर्व्वतः। पर्व्व पुनः पृणातेः प्रीणातेर्वेति। तद्वदयमपि मृगः अन्वेष्टा शत्रूणां भीमः भयानकः सर्वेषां भीत्यपादानभूतः। परमेश्वराद्भीतिः भीषास्माद्वातः पवत इत्यादिश्रुतिषु प्रसिद्धा। किं च कुचरः शत्रुवधादिकुत्सितकर्मकर्त्ता। कुषु सर्वासु भूमिषु लोकत्रये सञ्चारी वा। तथा गिरिष्ठाः गिरिवदुच्छ्रितलोकस्थायी। यद्वा। गिरि मन्त्रादिरूपायां वाचि सर्व्वदा वर्त्तमानः। ईदृशोऽयं स्वमहिम्ना स्तूयते। किं च यस्य विष्णोरुरुषु विस्तीर्णेषु

त्रिसङ्ख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातानि अधिक्षियन्ति आश्रित्य निवसन्ति स विष्णुः स्तूयते।

३। विष्णवे सर्व्वव्यापकाय शूषमस्मत्कृत्यादिजन्यं बलं महत्वं मन्म मनन स्तोत्र मननीयं शूष बल वा विष्णुमेतु प्राप्नोतु। कर्म्मणः सम्प्रदानत्वाच्चतुर्थी। कीदृशाय गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानाम। एव महानुभावं शूष प्राप्नोतु। कोऽस्य विशेष इति उच्यते। यो विष्णुरिदं प्रसिद्धं दृश्यमान दीर्घमतिविस्तृतं प्रयतं नियत सधस्थ सहस्थानं लोकत्रयमेक इत् एक एव अद्वितीयः सन् त्रिभिः पदेभिः पादैर्विममे विशेषेण निर्म्मितवान्।

४। यस्य विष्णोर्मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान्। य उ य एव पृथिवीं प्रख्यातां भूमिं द्यामुत द्योतनात्मकमन्तरिक्ष च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्द्दशलोकांश्च। यद्वा। पृथिवीशब्देन अधोवर्त्तीन्यतलवितलादि सप्तभुवनान्युपात्तानि। द्युशब्देन तदवान्तररूपाणि भूरादिसप्तभुवनानि। एवं चतुर्द्दश लोकान्। विश्वा भुवनानि

सर्वाण्यपि तत्रत्यानि भूतजातानि त्रिधातु त्रयाणां धातूनां समाहार स्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान् । तुजादित्वादभ्यामस्य दीर्घत्वम् । उत्पादितवानित्यर्थ॰ । छन्दोगारण्यके, तत्तेजोऽसृजत तदन्नमसृजत ता आप ऐक्षन्तेति भूतत्रयसृष्टि मुक्का हन्तेमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणीत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः ।

५ । आतिथ्यायां तदस्येत्येषा प्रधानस्य याज्या । अथातिथेरिति खण्डे सूत्रितम् । इदं विष्णुर्विचक्रमे तदस्य प्रियमभि पाथो अश्यामिति ।

अस्य महतो विष्णोः प्रियं प्रियभूतं तत्सर्वैः सेव्यत्वेन प्रसिद्धं पाथः । अन्तरिक्षनामैतत् । पाथोन्तरिक्षं पथा व्याख्यातमिति यास्केनोक्तत्वात् । अविनश्वरं ब्रह्मलोक- [ अभि ? ] मित्यर्थः । अश्यां व्याप्नुयाम् । तदेव विशेष्यते । यत्र स्थाने देवयवः देव द्योतनस्वभावं विष्णुमात्मन इच्छन्तः यज्ञदानादिभि॰ प्राप्नुमिच्छन्तो नरो मदन्ति तृप्तिमनुभवन्ति । तदश्यामित्यन्वयः । पुनरपि तदेव विशेष्यते । उरुक्रमस्य अत्यधिकं सर्व्वं जगदाक्रममाणस्य तत्तदात्मना । अतएव विष्णोर्व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये

केवलसुखात्मके पदे स्थाने मध्वः मधुरस्य उत्सो निष्यन्दो वर्त्तते । तदश्याम् । यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति सकलसमाचेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृश-मित्यर्थः । ततोधिकं नास्तीत्याह । इत्था इत्यमुक्तप्रकारेण स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धूभूतो हितकरो वा तस्य पदं प्राप्तवता न पुनरावृत्तिः । न च पुनरावर्त्तत इति श्रुतेस्तस्य बन्धुत्वम् । हिशब्दः सर्व्वश्रुतिस्मृतिपुराणादि प्रसिद्धिद्योतनार्थः ।

६ । हे पत्नीयजमानौ वां युस्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोर्गमनाय उश्मसि कामयामहे । तदर्थं विष्णुं प्रार्थयाम इत्यर्थः । तानीत्युक्त कानीत्याह । यत्र येषु वास्तुषु गावो रश्मयो भूरिशृङ्गा अत्यन्तोन्नत्युपेता बहुभिराश्रयणीया वा । अयास.अयना गन्तारः अतिविस्तृताः । यद्वा । यासो गन्तारः । अतादृशा अत्यन्तप्रकाशयुक्ता इत्यर्थः । अचा ह अत्र खलु वास्त्वाधारभूते द्युलोक उरुगायस्य बहुभिमर्हात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामाना वर्षितु विष्णो स्तत् तादृश सर्व्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूरि अति प्रभूतमवभाति स्वमहिम्ना स्फुरति । अयं मन्त्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः ।

तानि वा वास्तूनि कामयामहे गमनाय यत्र गावो भूरि-शृङ्गा बहुशृङ्गाः भूरीति बहुनो नामधेयम्। प्रभवतीति सतः। शृङ्गं श्रयतेर्वा शृणाते र्वा शम्नाते र्वा शरणायोद्गत-मिति वा शिरसो निर्गतमिति वा। अयासोयनाः। तत्र तदुरुगायस्य गायस्य विष्णोर्महागतेः परमं पदं पराध्यंस्थ-मवभाति भूरि। पादः पद्यतेरिति।

—:०:—

# DYAVA-PṚTHIVI I. 160

ते हीति पञ्चर्चं चतुर्थं सूक्तं दैर्घतमसं जागतम् द्यावापृथिव्यम्। ते हीत्यनुक्रान्तम्। चतुर्विंशेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमेतत् सूक्तं ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवम्। आ० ७।४। इति सूचितत्वात्। तथा पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि वैश्वदेवे द्यावापृथिव्यम् निविद्धानीयम् चातुर्विंशिकम् तृतीयसवनम्। आ० ७।६। इत्याभिप्लविके द्वितीयेऽहन्यतिदिष्टत्वात्। आभिप्लविकाद्द्वितीयादह्नः पृष्ठ्यस्य द्वितीयेऽहन्येतत्सूक्तमतिदेशतः प्राप्तम् पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्याम्। आ० ७।१०। इति सूत्रितत्वात्। प्रथमाश्विनशस्त्रे विनियुक्ता। संस्थितेष्वाश्विनायेत्यत्र सूचितम्। ते हि द्यावापृथिवी विश्वशंभुवा विश्वस्य देवीमृचयस्य। आ० ६।५। इति॥

१। ते हि खलु प्रसिद्धे द्यावापृथिवी अन्तस्तयोरन्तराले शुचिः शुद्धो विश्वस्य शोचयिता वा देवो दीप्यमानः सूर्यो धर्मणा प्रकाशोदकदानादिधारणेन युक्तः सन्नीयते। सर्वदा गच्छति। ईङ् गतौ दैवादिकः। तादृशं कर्म युवयोरनुग्रहादिति स्तुतिः। कीदृश्यौ ते। विश्वसभुवा। विश्वम् सुखभावयितृ ययोस्ते विश्वसंभुवा। विश्वस्य सुखयित्र्याविल्यर्थः। ऋतावरी ऋतवत्यौ। ऋतशब्दाच्छन्दसीवनिपाविति वनिप्। वनो र चेति। ङीब्रेफौ॥ रजस उदकस्योदकोत्पत्तौ। उदकं रज उच्यत इति निरुक्तम्। ४।१९। धारयत्कवी अकृच्छ्रेण धारकम् कवि ययोस्ते तादृश्यौ। उदकोत्पादनाय अप्रयत्नवत्याविल्यर्थः। यद्वा धारयत्कवि मेनीष्यादित्यो ययोस्ते तादृश्यौ। वृष्ट्युदकधारयत्सूर्योपेते इत्यर्थः। सुजन्मनी शोभनजन्मवत्यौ धिषणे धर्षणोपेते। स्वव्यापारेषु प्रगल्भे इत्यर्थः। देवी द्योतमाने। अत्र यद्यपि धिषणे इत्येतत् धिषणे रोदसी इति तन्नामसूक्तत्वाद् द्यावापृथिवीनाम तथापि द्यावापृथिवी इत्यस्य विद्यमानत्वाद् यौगिकम् द्रष्टव्यम्।

२। उरुव्यचसा प्रभूतव्यचनवत्यावतिविस्तीर्णे महिनी अतएव महत्यौ अशश्चतासज्यमाने। परस्परवियुक्ते इत्यर्थः। पिता पालयित्री द्यौः माता निर्मात्री पृथिवी चेत्युभे

भुवनानि भूतजातानि रक्षतः। पालयतः। द्यौष्पितः पृथिवि मातः। ऋ० ६।५१।५। इत्यादिश्रुतेर्मातापितृरूपत्वम्। किञ्च सुधृष्टमे अतिशयेन धृष्टे॥ छान्दसस्तकारलोप'। प्रगल्भे रोदसी द्यावापृथिव्यौ वपुष्ये न वपुषा हिते इव। प्राणिनाम् पितराविव शरीररक्षके इत्यर्थः। तदेवोपपादयति। यद्यस्मात् सीं सर्वतः पिता पितृस्थानीया द्यौ रूपैर्निरूपणसाधनैः प्रशस्तैः प्रकाशैर्निरूप्यमाणैर्वृष्ट्यादिभिर्वाभ्यवासयत् अभिवासयति अधितिष्ठति तस्मात् पिता माता च भुवनानि रक्षतः॥

३। पित्रो मातापित्रोर्द्यावापृथिव्योः। पिता मात्रेति पिता शिष्यते। उदात्तयन इति पितुर्विभक्तिरुदात्ता। पुत्रः पुरुत्राता पुत्रस्थानीय आदित्यः पवित्रवान् पावनरश्मियुक्तो धीरो धीमान् स वह्निः फलस्य वोढ़ा धारक. स्वमायया प्रज्ञया स्वकीयया भुवनानि भूतजातानि पुनाति। पावयति। प्रकाशयतीत्यर्थः। किं च स एव पुत्रः पृश्नि शुक्लवर्णां धेनुं प्रीणयित्रीं भूमिं सुरेतसं शोभनसामर्थ्यं शोभनोदकं वा वृषभं सेक्तारं द्युलोकं च मायया पुनाति। प्रकाशयतीत्यर्थः। कदा। विश्वाहा सर्वाण्यप्यहानि। सर्वकालमित्यर्थः। किं चास्य द्युलोकस्य। यद्वा। कर्मणि षष्ठी। इमं द्युलोकम्। शुक्रं पयो दीप्तं पयःसदृशमुदकम्

दुक्षत। दोग्धि। दुहेश्छान्दसे लुङि शल इगुपधादनिटः क्स इति च्लेः क्सादेशः। ईदृशौ महानुभाव आदित्यस्तयोः पुत्र इति द्यावापृथिव्योः स्तुतिः।

४। पूर्वं पुत्रमाहात्म्येनैते प्रशस्येदानीं स्वोत्पादकस्तुत्या प्रशंसति। अयं देवानाम् मध्ये देवतमोऽपसामपस्तमः। अप इति कर्मनाम। तेन तद्वान् लक्ष्यते। कर्मवताम् मध्ये प्रकृष्टकर्मा। अयमित्युक्ते क इत्याह। यो देवो विश्वशम्भुवा सर्वप्रकारेण भूतानाम् सुखस्य भावयित्री रोदसी द्यावापृथिव्यौ महानुभावे जजान उत्पादितवान्। न केवलं उत्पादनमात्रम् अपि तु यो देवो रजसी रञ्जनात्मिके द्यावापृथिव्यौ। रजसी इति द्यावापृथिव्योर्नाम रजसी सदसी इति तन्नामसु पाठात्। उक्तरूपे विममे विशेषेण परिच्छिनत्ति। किं स्वोपभोगाय नेत्याह। सुक्रतूयया शोभनकर्मेच्छया। येन कर्मणा प्राणिनां सुखं सम्भवति तादृक्कर्मेच्छया। अथवैतदुत्तरत्र सम्बध्यते। सुक्रतूययोक्तेन निमित्तेनेमे द्यावापृथिव्यावजरेभिरजीर्णैर्दृढतरैः स्कम्भनैर्गतिप्रतिबन्धसाधनैः शङ्कुभिः समानृचे। सम्यक् सर्वतः पूजितवान्। स्थापितवानित्यर्थः। ऋच स्तुतौ। लिटि रेफसामान्याद्विहल्त्वमस्तीति तस्मान्नुड्द्विहल इत्यभ्यासस्य नुट्। यस्मादेवं तस्मादयमेव देवो-

ऽयमेवापस्तम इत्येवं महानुभावेन परमेश्वरेणोत्पन्ने इति स्तुतिः ।

५ । ते प्रसिद्धे हे द्यावापृथिवी द्यावापृथिव्यौ गृणाने अस्माभिः स्तूयमाने सत्यौ । कर्मणि कर्तृप्रत्ययः । महि महदतिप्रभूतं श्रवः सर्वत्र प्रसिद्धमन्नं सर्वत्र श्रूयमाणां कीर्त्तिं वा नोऽस्मभ्य धासथः । धत्तम् । दधातेर्लेट्यडागमः । सिब्बहुलमिति सिप् । तथा बृहदतिप्रभूत चत्रं बलं धासथः । तदेव विशिष्यते । येनान्नबलेन विश्वहा सर्वेष्वप्यहःसु कृष्टीः पुत्रादिरूपाः प्रजा अभि ततनाम अभितो विस्तारयाम । तनोतेर्लोटि छान्दसो विकरणस्य श्लुः । आडुत्तमस्येत्याडागमः । तस्य छन्दस्युभयथेत्यार्ध-धातुकत्वादभ्यस्ताद्युदात्तत्वाभावे धातुस्वरः । कृष्टय इति मनुष्यनाम कृष्टयश्चर्षणय इति तन्नामसु पाठात् । किं च पनाय्यं स्तुत्यमोजः शरीरबलमस्मे अस्मासु सम्यगिन्वतम् । व्याप्नुतम् । प्रवर्धयतमित्यर्थः । इन्वतिर्व्याप्तिवचनः इन्वति ननचेति तन्नामसु पाठात् ।

---

## INDRA II. 12.

द्वितीयेनुवाक एकादश सूक्तानि। तत्र यो जात इति पञ्चदशर्चं प्रथमं सूक्तं गार्त्समदं त्रैष्टुभमैन्द्रम्। संसवे निष्केवल्ये निविद्धानीयस्य पुरस्ताद्यो जात एवेति शंसेत्। यदि पर्यायानिति खण्डे सूचितम्। यो जात एवेति निष्केवल्य इति। आभिप्लविके तृतीयेहनि निष्केवल्ये यो जात एवेति निविद्धानीयम्। सूत्रितं च। तृतीयस्य त्र्यर्यमा यो जात एवेति मध्यन्दिन इति विश्वजिति माध्यन्दिनसवने मैत्रावरुणः स्वशस्त्रे प्राकृतात्सूक्तात्पूर्वं यो जात इति सामसूक्तं शंसेत्। विश्वजितोऽग्निं नर इति खण्डे सूचितम्। सत्रा मदासो यो जात एवाभूरेक इति सामसूक्तानीति। अग्निष्टुन्निष्केवल्ये निविद्धानमिदम्। श्येनाजिराभ्यामिति खण्डे सूचितम्। तिष्ठा

हरी इति यो जात एवेति मध्यन्दिन इति। महाव्रते निष्केवल्ये यो जात एवेति सूक्तम्। ऊरू इति खण्डे सूत्रितम्। वने न वा यो न्यधायि चाकन् यो जात एव प्रथमो मनस्वानिति। अत्रेतिहासो बृहद्देवतायामुक्तः।

संयुज्य तपसात्मानमैन्द्रं बिभ्रन्महद्वपुः।
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च॥
तमिन्द्र इति मत्वा तु दैत्यौ भीमपराक्रमौ।
धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः॥
विदित्वा स तयोर्भावमृषिः पापं चिकिर्षतोः।
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्त्तयत्॥

अन्ये त्वन्यथा वर्णयन्ति। पुरा किलेन्द्रादयो वैन्ययज्ञं समाजग्मुः। गृत्समदोऽपि तत्रागत्य सदस्यासीत्। दैत्याश्चेन्द्रजिघांसया तत्र समागमन्। तान्दृष्ट्वा निर्जगामेन्द्रो यज्ञाद्गृत्समदाकृतिः। स च गृत्समदो वैन्येन पूजितो यज्ञवाटान्निरगच्छत्। निर्गच्छन्तं तमृषिं दृष्ट्वा अय-

मेवेन्द्र इति मन्यमानास्तमसुराः परिवव्रुः । नाह-मिन्द्रस्तुच्छः किं त्वेवंगुणोपेतः स इत्यनेन सूक्तेन तान् प्रत्युवाच । अपरे त्वेवं कथयन्ति गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वा असुरा. परिवव्रुः । स इन्द्रो गृत्समदरूपेण यज्ञ-वाटान्निर्गत्य स्वर्गं जगाम । ततोऽसुरा इन्द्रो विलम्बित इत्यन्तः प्रविश्य गृत्समदं दृष्ट्वा पूर्वमेव गृत्समदो गतः अयं त्विन्द्रोऽस्मद्भयाद्गृत्समद-रूपेणास्त इति तं जगृहुः । स तान् नाहमिन्द्रो-ऽयमित्यनेन सूक्तेन प्रत्युवाच । अयमेवार्थो महा-भारते प्रपञ्चितः ।

१ । गृत्समदो ब्रूते । जनासः जनाः हे असुरा यो जात एव जायमान एव सन् प्रथम· देवानां प्रधानभूतः मनस्वान् मनस्विनामग्रगण्यः देवः द्योतमानः सन् क्रतुना वृत्रवधादिलक्षणेन स्वकीयेन कर्मणा देवान् सर्वान्यागदेवान् पर्यभूषत् रक्षकत्वेन पर्यग्रहीत् । भूष अलङ्कारे भूवादिः । लङि रूपम् । यद्वा । सर्वानन्यान् देवान् पर्यभूषत् पर्यभवत् अत्यक्रामत् । अस्मिन् पक्षे भवतेर्व्यत्ययेन क्सः । शुग्रकः

क्तितीतीट्प्रतिषेधः। यस्येन्द्रस्य शुष्मात् शरीरात् बलात् रोदसी द्यावापृथिव्यौ अभ्यसेतामबिभीताम्। भ्यस भये। अनुदात्तेत्। भ्यसभयवेपनयोरिति नैरुक्ताः। अभ्यसेतामवेपेतां वा। तथा च मन्त्रान्तरम्। इमे चित्तवमन्यवेवेपेते भियसा मही इति। नृम्णस्य सेनालक्षणस्य बलस्य मह्ना महत्त्वेन युक्तः स इन्द्रो नाहमिति। अत्र निरुक्तम्। यो जायमान एव प्रथमो मनस्वी देवो देवान् क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलाद्द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्तेति।

२। हे जनाः यः इन्द्रः व्यथमानां चलन्तीं पृथिवीमदृंहत् शर्करादिभिर्दृढामकरोत्। दृह दृहि वृद्धौ। यश्च प्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान् पर्वतानरम्णात् नियमितवान् स्वे स्वे स्थाने स्थापितवान्। अरम्णात् रमु क्रीडायाम्। अन्तर्भावितण्यर्थस्य व्यत्ययेन श्नाप्रत्ययः। यश्च वरीय उरुतममन्तरिक्षं विममे निर्ममे विस्तीर्णं चकारेत्यर्थः। यश्च द्यां दिवमस्तभ्नात् स्तम्भनिरुद्धामकरोत्। स्तम्भु रोधन इति सौत्रो धातुः। स एवेन्द्रो नाहमिति।

३। यः अहिं मेघं हत्वा मेघहननं कृत्वा सप्त सर्पणशीलाः सिन्धून् स्यन्दनशीला अपः अरिणात् प्रैरयत्।

यद्वा । सप्त गङ्गायमुनाद्या मुख्या नदीररिणात् । रीङ स्रवणे क्र्यादि । यश्च बलस्य बलनामकस्यासुरस्य अपधा तत्कर्तृकान्निरोधान्निरुद्धा गा उदाजत् निरगमयत्। अपधा । अपपूर्वाद्दधातेरातश्चोपसर्ग इति भावे अङ्प्रत्ययः। सुपां सुलुगिति पञ्चम्या आकारः । यश्च अश्मनोः । अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः । अत्यन्तमृदुरूपयोर्मेघयोरन्तर्मध्ये वैद्युतमग्निं जजान उत्पादयामास । यश्च समत्सु सम्भक्षयन्ति योद्धॄणामायूंषीति समदः सङ्ग्रामाः। तेषु संवृक् भवति। वृणक्तेर्हिंसार्थस्य क्विपि रूपम् । स इन्द्रो नाहमिति ।

४ । येन इन्द्रेण इमा इमानि विश्वा विश्वानि च्यवना नश्वराणि भुवनानि कृतानि स्थिरीकृतानि । यश्च दासं वर्णं शूद्रादिकं यद्वा दासमुपक्षपयितारमधरं निकृष्टमसुरं गुहा गुहायां गूढस्थाने नरके वा अकः अकार्षीत् । करोतेर्लुङि मन्त्रे घसेत्यादिना च्लेर्लुकि रूपम् । लक्ष लक्ष्यं जिगीवान् । जि जये । क्वसौ सन् लिटोर्जेरित्यभ्यासादुत्तरस्य कुत्वम् । दीर्घश्छान्दसः। जितवान् यः अर्यः। अरेः षष्ठ्येकवचने छान्दसो जनादेशः। शत्रोः सम्बन्धीनि पुष्टानि समृद्धानि आदत् आदत्ते । तत्र दृष्टान्तः । श्वघ्नीव । श्वभिर्मृगान् हन्तीति श्वघ्नी व्याधः । यथा व्याधो जिघृक्षन्तं मृगं परिगृह्णाति तद्वत् ।

५। अपश्यन्तो जना घोरं शत्रूणां घातकं यं पृच्छन्ति स्म कुहसेति स इन्द्रः कुत्र वर्त्तत इति। सेति। सोचि लोपे चेत्पादपूरणमिति सोर्लोपे गुणः। न क्वचिदसौ तिष्ठतीति मन्यमाना जना एनमिन्द्रमाहुः एष इन्द्रो नास्तीति। तथा च मन्त्रे। नेन्द्रो अस्तीति नेम उ त्व आहेति। ईमिति पूरणः। स इन्द्रो विज इव। इवशब्द एवार्थे। उद्वेजक एव सन् अर्यः अरेः सम्बन्धीनि पुष्टीः पोषकाणि गवाश्वादीनि धनानि आमिनाति सर्व्वतो हिनस्ति। मीङ हिंसायाम्। मीनातेर्निगम इति ह्रस्वः। तस्मात् अदस्मा इन्द्राय धत्त स इन्द्रोस्तीति विश्वासमत्र कुरुत। यद्यप्यसौ विशिष्टतोस्माभिर्न दृश्यते तथाप्यस्तीति विश्वासं कुरुत। एवं निर्धारणमहिमोपेतः स इन्द्रो नाहमिति।

६। यो रध्रस्य। रध हिंसासंराद्ध्योः। समृद्धस्य चोदिता धनानां प्रेरयिता भवति। यश्च कृशस्य दरिद्रस्य च यश्च नाधमानस्य। नाधृ णाधृ याच्ञोपतापैश्वर्याशीःषु। याचमानस्य कीरेः। करोतेः कीर्त्तयतेर्वा। स्तोतुर्ब्रह्मणो ब्राह्मणस्य च धनानां प्रेरयिता। यश्च सुशिप्रः शोभनहनुः सुशीर्षको वा सन् युक्तग्रावाणः अभिषवार्थमुद्यतग्रावाणः सुत-सोमस्य अभिषुतसोमस्य यजमानस्य अविता रक्षिता भवति

स एवेन्द्रो नाहमिति । ब्रह्मशब्दस्य त्वन्नपरत्वे ह्याद्युदात्तता स्यात् । यथा ब्रह्म वन्वानो अजरं सुवीरमिति । अयं त्वन्तोदात्तः पठ्यत इति नान्नपरः ।

७ । यस्य सर्व्वान्तर्यामितया वर्त्तमानस्य प्रदिशि प्रदेशने अनुशासने अश्वासः अश्वा वर्त्तन्ते यस्यानुशासने गावः यस्यानुशासने ग्रामाः । ग्रसन्त्येनेति ग्रामाः जनपदाः । यस्याज्ञाया विश्वे सर्व्वे रथास. रथा वर्त्तन्ते यश्च वृत्रं हत्वा सूर्य्यं जजान जनयामास यश्चोषसम् । तथा मन्त्र. । जजान सूर्य्यमुषसं सुदसा इति । यश्च मेघभेदनद्वारापां नेता प्रेरकः स इन्द्र इत्यादि प्रसिद्धम् ।

८ । य क्रन्दसी रोदसी शब्द कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं सगच्छन्त्यौ यमिन्द्र विह्वयेते स्वरक्षार्थं विविधमाह्वयतः । परे उत्कृष्टाः अवरे अधमाश्च उभया उभयविधा उभयमाह्वयन्ति । समानम् इन्द्ररथ-सदृशं रथम् आतस्थिवासा आस्थितौ द्वौ रथिनौ तमेवेन्द्रं नाना पृथक् पृथक् हवेते आह्वयेते । यद्वा । समान-मेकरथमारूढाविन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथगा-ह्वयेते । तयोरन्यतरः स इन्द्रो नाहमिति ।

९ । यस्मादृते जनासः जना न विजयन्ते विजयं न प्राप्नुवन्ति । अतः युध्यमाना युद्धं कुर्वाणा जना अवसे

स्वरक्षणाय यमिन्द्रं हवन्ते आह्वयन्ति। यश्च विश्वस्य सर्व्वस्य जगतः प्रतिमानं प्रतिनिधिर्बभूव यश्चाच्युतच्युत् अच्युतानां चयरहितानां पर्व्वतादीनां च्यावयिता स इन्द्र इत्यादि प्रसिद्धम्।

१०। यो महि महदेन. पापं दधानान् शश्वतो बहूनमन्यमानान् आत्मानमजानत इन्द्रमपूजयतो वा जनान् शर्व्वा। शृणाति शत्रूननेनेति शरुर्वज्रः। तेनायुधेन जघान। हन्तेर्लिटि रूपम्। यश्च शर्धते उत्साहं कुर्वते अनात्मज्ञाय जनाय शृध्यामुत्साहनीयं कर्म्म नानुददाति न प्रयच्छति। अनुपूर्वात् डुदाञ् दाने जौहोत्यादिकः। अभ्यस्तानामादिरिति तिङि चोदात्तवतीति गतिर्निघातः। यश्च दस्योरुपचपयितुः शत्रोर्हन्ता घातकः स इन्द्र इत्यादि पूर्व्ववत्।

११। यः पर्व्वतेषु क्षियन्तम् इन्द्रभिया बहून् संवत्सरान्प्रच्छन्नो भूत्वा पर्व्वतगुहासु निवसन्त शम्बरमेतन्नामकं मायाविनमसुरं चत्वारिंश्यां शरदि चत्वारिंशे संवत्सरे अन्व- विन्दत् अन्विष्यालभत। लब्ध्वा च य ओजायमानम्। कर्त्तुः क्यङ् सलोपश्च। ओजसोऽप्सरसो नित्यमिति सकारलोपः। बलमाचरन्तमहिमाहन्तारं दानुं दानव शयानं शम्बरमसुरं जघान हतवान् स इन्द्रो नाहमिति।

१२ । यः सप्तरश्मिः सप्तसङ्ख्याका पर्जन्या रश्मयो यस्य । ते च रश्मयो वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्चेतीति ये चेमेऽशिमिविद्विषः पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभिरिति तैत्तिरीयारण्यके ह्याम्नाताः । वृषभो वर्षकस्तुविष्मान् वृद्धिमान्बलवान्वा सप्त सर्पणस्वभावान्-सिन्धूनप, सर्त्तवे सरणाय अवासृजत् अवसृष्टवान् । यद्वा । गङ्गाद्याः सप्त मुख्याः नदीरसृजत् । यश्च वज्रबाहुः सन् द्या दिवमारोहन्तं रौहिणमसुरम् अस्फुरत् जघान । स्फुर स्फुरणे तुदादिः ।

१३ । अस्मै इन्द्राय द्यावापृथिवी । इतरेतरापेक्षया द्विवचनं प्रमित्रयोर्वरुणयोरितिवत् । नमेते स्वयमेव प्रह्वी भवतः । णमु प्रह्वत्वे । कर्मकर्त्तरि न दुहस्नुनमां यक्-चिणाविति यकः प्रतिषेध. । चिदपि च अस्येन्द्रस्य शुष्मा-द्बलात्पर्व्वता भयन्ते बिभ्यति । य सोमपाः सोमस्य पाता निचितः सर्व्वैः । यद्वा । अन्येभ्योपि देवेभ्यो दृढाङ्ग. । वज्रबाहुः वज्रसदृशबाहुः यश्च वज्रहस्तः वज्रयुक्तः स इन्द्र इत्यादि प्रसिद्धम् ।

१४ । यः सुन्वन्तं सोमाभिषव कुर्व्वन्तं यजमानमवति रक्षति । यश्च पुरोडाशादीनि हवींषि पचन्त यश्च ऊती ऊतये । सुपां सुलुगिति चतुर्थ्याः पूर्व्वसवर्णदीर्घः । स्वरक्षार्थे-

शस्त्राणि शंसन्तं यश्च शशमानमवति स्तोत्र कुर्वाणं रक्षति । ब्रह्म परिवृढ़ं स्तोत्रं यस्य वर्द्धनं वृद्धिकर भवति । तथा यस्य सोमो वृद्धिहेतुर्भवति । यस्य चेदमस्मदीय राधः पुरोडाशादिलक्षणमन्नं वृद्धिकरं भवति । स इन्द्र इत्यादि प्रसिद्धम् ।

१५ । इदानीमृषिः साक्षात्कृतमिन्द्र प्रति प्रब्रूते । हे इन्द्र यो दुध्रो दुर्धर सन् सुन्वते सोमाभिषवं कुर्व्वते पुरोडाशादिहवींषि पचते यजमानाय वाजमन्नं बल वा दर्द्दर्षि भृश प्रापयसि स तादृशस्त्व सत्यो यथार्थभूतोसि । न पुनर्नास्तीति बुद्धियोग्योसि । किलेति प्रसिद्धौ । ते तव प्रियासः सुवीरास. कल्याणपुत्रपौत्राः सन्तो वयं विश्वह सर्व्वेष्वहःसु विदथं स्तोत्रम् आवदेम ब्रूयाम ।

---

# RUDRA II. 33.

चतुर्थेऽनुवाके एकादश सूक्तानि। तत्रा ते पितरिति पञ्चदशर्चं प्रथमं सूक्तं गृत्समदस्यार्षं त्रैष्टुभं रौद्रम्। अनुक्रान्तं च। आ ते पञ्चोना रौद्रमिति। शूलगवादिरुद्रयज्ञेष्वनेन सूक्तेन प्रतीची दिगुपस्थेया। सूत्रितञ्च। कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्। आ० सू० ४।८।२३। इति। रुद्रदेवत्ये पशौ आ ते पितरिति हविषोऽनुवाक्या। सूत्रितञ्च। आ ते पितर्मरुताम् सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीचे इति तिस्रः। आ० ३।८। इति। अत्र शौनकः। चतुर्दशी-मुपोष्यैकां कृष्णस्य जुहुयाच्चरुम्। आ ते सूक्तेन रौद्रेण प्रत्यृचं वाग्यतः शुचि॥ पूर्वमाज्याहुती-र्हुत्वाथोपस्थाय च शङ्करम्। हविःशेषेण वर्त्तते-

कान्तरमतन्द्रितः। पूर्णमासे जयेन्मृत्युं रोगैश्च परिमुच्यते। ऋग्वि० १।३०। इति।

१। हे मरुतां पितः मरुत्संज्ञानां देवानामुत्पादक रुद्र॥ परमपि छन्दसीति षष्ठ्यन्तस्य पूर्वामन्त्रितांगवद्भावात् सर्वानुदात्तत्वम्। ते त्वदीयमस्मभ्यम् दातव्यं सुम्नं सुखमैतु। आगच्छतु। रुद्रस्य च मरुतां पितृत्वमिदं पित्रे मरुतामाख्यायिकामुखेनावादिषम। ऋग्वे० १।११४।६ तथा त्वं नोऽस्मान् सूर्यस्य सन्दृशः सन्दर्शनान्मा युयोथाः। मा पृथक्कार्षीः। यु मिश्रणामिश्रणयोः। लङि छान्दसः शपः श्लुः। छन्दस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाद्गुणः। अर्वति शत्री। भ्रातृव्यो वा अर्वेति श्रुतेः। नोऽस्माकं वीरो वीर्यवान् पुत्रादिरभिक्षमेत। अभिभवतु। यद्वा वीरस्त्वं नोऽस्मानभिक्षमेथाः। अस्मान् कृतापराधानभिक्षमस्व। हे रुद्र प्रजाभिः पुत्रपौत्रादिभिः प्रजायेमहि। प्रभूताः स्याम।

२। हे रुद्र त्वादत्तेभिस्त्वया दत्तैः शन्तमेभिरतिशयेन सुखकरैर्भेषजेभिर्भेषजैरौषधैः शतं हिमा शतं हेमन्तान् शतं संवत्सरानशीय। व्याप्नुयाम्। अश्नोतेर्लिङि छान्दसो विकरणस्य लुक्। अपि च अस्मदस्मत्तो द्वेषो द्वेष्टॄन्

विचातयस्व । विनाशय । तथांहः पापं वितरमत्यन्त विचातयस्व । अमीवा रोगान्विषुचीर्विषु नानाञ्चतीः कृत्स्नशरीरव्यापकान् रोगान्विचातयस्व । अस्मत्तः पृथक्कृत्य विनाशय ।

३ । हे रुद्र जातस्योत्पन्नस्य सर्वस्य जगतो मध्ये श्रियैश्वर्येण श्रेष्ठः प्रशस्यतमोऽसि । भवसि । तथा हे वज्रबाहो आयुधहस्त रुद्र तवसा प्रवृद्धाना मध्ये तवस्तमोऽतिशयेन प्रवृद्धोऽसि । स त्वं नोऽस्मानंहसः पापस्य पारं तीरं स्वस्ति क्षेमेण पर्षि । पारय । तथा रपसः पापस्य विश्वाः सर्वा अभीतीरभिगमनानि युयोधि । पृथक् कुरु । यौतेश्छान्दसः शपः श्लुः । वा छन्दसीत्यपित्त्वस्य विकल्पनात् ङित्त्वाभावेऽङितश्चेति हेर्धिः ।

४ । हे रुद्र त्वा त्वां नमोभिरयथाक्रियमाणैर्नमस्कारैर्हविर्भिर्वा मा चुक्रुधाम । मा क्रोधयाम । क्रुद्धं मा कार्ष्म । क्रुध कोपे अस्माण्णयन्ताल्लुङि चङि रूपम् । हे वृषभ कामानां वर्षितर्दुष्टुतो दुःस्तुत्याऽशोभनया स्तुत्या मा चुक्रुधामेत्येव । तथा सहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेन मा क्रोधयाम । श्रेष्ठो हि स्वस्मान्न्यूनेन सहाह्वाने क्रुद्धो भवति । स त्वं नोऽस्माक वीरान् पुत्रान् भेषजेभिस्त्वदीयैर्भेषजैरौषधैरुदर्पय । उत्कृष्टं संयोजय । हे रुद्र त्वा त्वा

भिषजां चिकित्साभिज्ञानां मध्ये भिषक्तममतिशयेन भैषज्यस्य कर्त्तारं शृणोमि। प्रथमो दैव्यो भिषक्। वा० स० १६।५ इति च मन्त्रान्तरेऽप्युक्तम्।

५। यो रुद्रो हविर्भिश्चरुपुरोडाशादिभिः सहितैर्हवीमभिराह्वानैः स्तुतिलक्षणैर्हवते। आह्वयते स्तूयते। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। बहुल छन्दसीति ह्वयते सम्प्रसारणम्। तं रुद्र स्तोमेभिः स्तोत्रैरवदिषीय। अवखण्डयामि। पृथक्करोमि। अपगतक्रोध करोमीति यावत्। दो अवखण्डने। व्यत्ययेनात्मनेपदम्। बहुलं छन्दसीतीत्वम्। ऋदूदरः। ऋदूदरो मृदूदर इति यास्कः। नि० ६।४। सुहवः शोभनाह्वानो बभ्रुर्भर्ता सर्वस्य बभ्रुवर्णो वा। सुशिप्रः। शिप्रे हनू नासिके वा। शोभनशिप्र.। एवंगुणविशिष्टः स रुद्रोऽस्यै मनायै। हन्मोति मन्यमाना बुद्धिर्मना। तस्यै नोऽस्मान् मा रीरधत्। मा वशं नैषीत्। रध हिंसासंराद्ध्योः। अस्माण्ण्यन्ताल्लुङि चङि रूपम्। रध्यतिर्वशगमन इति यास्कः।

६। वृषभः कामाना वर्षिता मरुत्वान् मरुद्भिः पुत्रैर्युक्तो रुद्रो नाधमानं याचमान मा मा त्वक्षीयसा दीप्तेन वयसान्नेनोन्ममन्द। उत्कर्षेण तर्पयतु। अपि चाह घृणीव छाया यथा सूर्यकिरणसन्तप्तश्छायां प्रविशति एवं रुद्रस्य सुम्नं

सुखमपरां अपापः सन् अशीय। व्याप्नुयाम्। तदर्थं तं रुद्रमाविवासेयम्। परिचरेयम्। विवासतिः परिचरणकर्मा।

७। हे रुद्र ते तव मृड़याकुः सुखयिता स्यः स हस्तः क्व कुत्र वर्त्तते। यो हस्तो भेषजो भैषज्यकृत् जलाषः सर्वेषां सुखकरोऽस्ति। भवति। स हस्तो विद्यत एव। तेन हस्तेन मां रक्षेति भावः। अपि च हे वृषभ कामानां वर्षितः दैव्यस्य देवकृतस्य रपसः पापस्यापभर्त्ता अपहर्ता विनाशयिता भूत्वा कृतापराधं मां नु क्षिप्रमभिचक्षमीथाः। अभिक्षमस्व। क्षमूष सहने। लङि छन्दसः शपः श्नुः। बहुलं छन्दसीतीड़ागमः।

८। रुद्रदेवत्ये पशौ वपापुरोडाशहविषां क्रमेण प्र बभ्रव इत्याद्यास्तिस्रो याज्याः। प्रबभ्रवे वृषभाय श्वितो च इति तिस्र आ पश्चातान्नासत्या पुरस्तात्। आ० ३।८। इति बभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा वृषभाय कामाना वर्षित्रे तद्वत्प्रसह्यकारिणे वा श्वितीचे श्वैत्यमञ्चते। श्विता वर्णे। औणादिक इन् प्रत्ययः। श्वितिमञ्चतीत्यञ्चते-र्ऋत्विगित्यादिना क्विन्। चतुर्थ्येकवचनेऽच इत्यकारलोपे चाविति दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। एवंगुणविशिष्टाय रुद्राय महो महीं महतोऽपि महतीं सुष्टुतिं शोभनस्तुतिं प्रेरयामि। प्रकर्षेणोच्चारयामि। हे

स्तोत: कल्मलीकिनम्। ज्वलतो नामधेयमेतत्। नैघ १।१७। ज्वलन्तं कलयत्यपगमयति मलमिति कल्मलीकं तेज:। तद्वन्तं रुद्रं नमोभिर्नमस्कारैर्हविर्भिर्वा नमस्य। पूजय। वयं च रुद्रस्य महादेवस्य त्वेष दीप्तं नाम गृणी-मसि। गृणीम: सङ्कीर्त्तयाम'। गॄ शब्दे। क्रैयादिक:। इदन्तो मसि:। प्वादीनां ह्रस्व:।

९। स्थिरेभि: स्थिरैर्दृढैरङ्गैरवयवैर्युक्त: पुरुरूपोऽष्ट-मूर्त्यात्मकैर्बहुभीरूपैरुपेत उग्र उद्गूर्णस्तेजस्वी बभ्रुर्भर्ता बभ्रु-वर्णो वा रुद्र: शुक्रेभिर्दीप्तैर्हिरण्यैर्हिरण्मयैर्हितरमणीयै-र्वालङ्कारै: पिपिशे। दीप्यते। पिश अवयवे। कर्मणि लिट्। ईशानादीश्वरादस्य भुवनस्य भूतजातस्य भूरेर्भर्त्तू रुद्रादसुर्य्यम्। असु क्षेपणे। असेरुरन्। असुर: क्षेप्ता। तत्र साधु। असुर्य्यं बल न वा उ योषत्। नैव पृथक् भवति। यौतेर्लेट्यड़ागम:। सिब्बहुलं लेटीति सिप्।

१०। हे रुद्र त्वमर्हन् अर्हो योग्य एव सन् साय-कानि शरान् धन्व धनुश्च विभर्षि। धारयसि। तथार्ह-न्नेव यजतं यजनीयं पूजनीयं विश्वरूप बहुविधरूपयुक्तं निष्क हारं विभर्षि। तथार्हन्नेवेद विश्व सर्व्वमभ्वम्। मह-न्नामैतत्। अतिविस्तृतं जगद्दयसे। रक्षसि। दैङ् रक्षणे। हे रुद्र त्वत् त्वत्तोऽन्यत् किञ्चिदोजीय ओजस्वितरं

बलवत्तरं न वा अस्ति। न खलु विद्यते। अतस्त्वमेवोक्तव्यापारेषु योग्य इत्यर्थः। ओजःशब्दान्मत्वर्थीयो विनिः। तत अतिशायनिक इष्ठन्। विन्मतोर्लुक्। टेरिति टिलोपः॥

११। प्रयाणे मृगस्यामनोज्ञवचः श्रुत्वा स्तुहि श्रुतमित्येता जपेत्। सूत्रितं च। स्तुहि श्रुत गर्त्तसदं युवानमिति मृगस्य। ऋ० ३।१०।१०। इति।

हे स्तोतः श्रुतं विश्रुतं प्रख्यातं रुद्रं स्तुहि। कीदृशम्। गर्त्तसदम्। गर्त्तो रथः। तत्र सीदन्त युवान नित्यतरुणं मृगं न भीमं मृग सिंहमिव भयङ्करम् उपहत्नुमुपहन्तारं शत्रूणामुग्रमुद्गूर्णम्। हे रुद्र त्वं स्तवानोऽस्माभिः स्तूयमानः सन् जरित्रे स्तोत्रे मह्यं मृड। सुखय। ते त्वदीयाः सेना अस्मदन्यमस्मद्व्यतिरिक्तं पुरुषं निवपन्तु। निघ्नन्तु।

१२। वन्दमानम् आयुष्मान् भव सौम्येति स्तुवन्तं पितरं कुमारश्चित् यथा कुमारः। चिदित्येतदुपमार्थे। हे रुद्र उपयन्तमस्मत्समीपे गच्छन्तं त्वां प्रतिननाम। प्रतिनतोऽस्मि। अपि च भूरेर्बहुनो धनस्य दातारं सत्पतिं सता पालयितारम्। पत्यावैश्वर्य्ये इति पूर्व्वपदप्रकृतिस्वरत्वम्। हे रुद्र एवंभूतं त्वां गृणीषे। स्तौमि। मिपस्तिङां तिङो भवन्तीति से आदेशः। स्तुतश्च त्वमस्मे अस्मभ्यं भेषजा भेषजानि रासि। देहि।

१३। हे मरुतो रुद्रपुत्रा वो युष्माकं या यानि भेषजा भेषजान्यस्मदारोग्यहेतुभूतान्यौषधानि शुचीनि शुद्धानि निर्म्मलानि सन्ति। हे वृषणः कामानां वर्षितारो मरुतो या यानि च युष्मदीयानि भेषजानि शंतमा अतिशयेन सुखकराणि। या यानि च भेषजानि मयोभु मयोभूनि मयसः सुखस्य भावयितृणि नोऽस्मत्पिता मनुर्य्यानि भेषजानि युष्मदीयान्यवृणीत वृतवान् ता तानि भेषजानि रुद्रस्य महादेवस्य सम्बन्धि शं च योश्च यच्छमनीयाना रोगाणामुपशमनं यावनीयानां भयानां यद्यावनमस्मत्तः पृथक्करण तदुभयं च वश्मि। कामये। वश कान्तौ। आदादिकः।

१४। रुद्रस्य महादेवस्य हेतिरायुधं नोऽस्मान् परिवृज्याः। परिवर्ज्जयतु। तथा त्वेषस्य दीप्तस्य रुद्रस्य महो महती दुर्मति दुःखकारिणी बुद्धिश्च परिगात्। अस्मान्वर्ज्जयित्वान्यत्र गच्छतु। अपपरी वर्ज्जने। पा० १।४।८८। हे मीढ्व सेचनसमर्थ रुद्र स्थिरा स्थिराणि त्वदीयानि धनूंषि मघवद्भ्यो हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्योऽवतनुष्व। अवततज्यानि कुरु। तथा तोकायास्मत्पुत्राय तनयाय तत्पुत्राय च मृड। सुखं कुरु।

१५। हे वभ्रो जगतो भर्त्तर्वभ्रुवर्णो वा वृषभ कामानां वर्षितः चेकितान सर्व्वं जानन् हे देव द्योतमान रुद्र यथा

# APAM NAPAT II. 35.



उपेयमिति पञ्चदशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभमपांनपाद्दैवताकम्। तथा चानुक्रान्तम्। उपेमपोनप्त्रीयमिति। सूक्तविनियोगो लैङ्गिकः।

१। वाजयुर्वाजमन्नमात्मन इच्छन्नहमीमेना वचस्यां वचसः स्तोत्रस्येच्छामुपासृक्षि। उपासृजामि। उत्पादयामि। अपां नपातं स्तोतुं प्रवृत्तोऽस्मीत्यर्थः। सृजेश्छान्दसो लुङ्। लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद् गुणाभावः। स च नाद्यो नदीना शब्दकारिणीना मेघस्थानामपां सम्बन्धी आशुहेमा आशु शीघ्रं गन्ता। हि गतावित्यस्मादन्येभ्योऽपि दृश्यन्त इति मनिन्। एवभूतोऽपां नपात् अपा पौत्रस्थानीयः। अद्भ्य ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एषोऽग्निर्जायत इति तत्पौत्रत्वम्। एतत्सञ्ज्ञको देवो गिरः। गृणातीति गीः स्तोता। तस्य मे मम कुवित्। बहुनामैतत्। बहुल चनोऽन्नं दधीत। दधातु। विदधातु। प्रयच्छत्वित्यर्थः। अपि चास्मान्

सुपेशसः शोभनरूपान् शोभनालङ्कारान्वा करति । करोतु । करोतेर्व्यत्ययेन शप् । कः करत्करतिकृधिकृतेष्वनदितेः । पा ८।३।५० इति विसर्जनीयस्य सत्वम् । हि यस्मादयं देवो जोषिषत् । स्तोत्राणि सेवते । तस्मादस्मानेवमनुगृह्णात्वित्यर्थः । जुषी प्रीतिसेवनयोः । लेट्यडागमः । विकरणः सिप् । इडागमश्च । हि चेति निघातप्रतिषेधः ॥

२ । अस्मा अपानपात्संज्ञकाय देवाय हृदो हृदयात् सुतष्टं सुष्टु निर्मितमिमं मन्त्रं सुष्टु आभिमुख्येन वोचेम । ब्रवाम । अस्यास्माभिरुक्तमिमं मन्त्र कुविद्वेदत् । बहुलं जानातु । वेत्ते र्लेट्यड़ागमः । निपातैर्यद्यदिहन्तेति निघातप्रतिषेधः । किं स्तोत्रमिति चेदुच्यते । अर्यः स्वाम्यपानपात्संज्ञको वैद्युतोऽग्निरसुर्यस्य । असुर. शत्रून् क्षेप्ता । तस्य स्वभूतस्य बलस्य मह्ना महिम्ना महत्त्वेन विश्वानि सर्वाणि भुवना भुवनानि वृष्ट्युदकानि वृष्ट्युत्पादनेन भूतजातानि वा जजान । जनयामास ।

३ । अपोनप्त्रीये वसतीवरीसमीप एकधनासु प्राप्तासु सैमन्या यन्तीत्येषानुवक्तव्या । सूत्रित च । समन्या यन्त्युप यन्त्यन्या इति तीर्थदेशे । आ० ५।१ इति । सारस्वते च शास्त्रे यद्यप्सु शम्या निपतेत् तदानीमपोनप्त्रीयश्चरुः कार्यः । तत्रैषैव याज्या । सूत्रितं च । समन्या यन्त्युपयन्त्यन्या

इत्यात: समानं सर्वेषाम्। आ० १२।६। इति। अन्या वर्षा आपो संयन्ति। भूम्या सङ्गच्छन्ते। अन्याश्च पूर्वं तत्रावस्थिता उपयन्ति। उपगच्छन्ति। ता: सर्वा आप: समानं सह नद्यो नदीभूता ऊर्वं समुद्रमध्ये वर्त्तमान वड़वानलं पृणन्ति। पृण प्रीणने तौदादिक:। तमु तमेवापां नपातं शुचिं निर्मलं दीदिवांस दीप्यमानम्। दीदेतिश्छान्दसो दीप्तिकर्मा। लिट: क्वसु:। वस्वेकाजाद्धसामिति नियमादिडभाव:। छन्दसि वेति व्यक्तव्यमिति वचनाद्विर्वचनाभाव:। एवम्भूतं शुचय: शुद्धा आप: परितस्थु:। परिवृत्य तिष्ठन्ति। एष हि वैद्युताग्निरूपेण मेघे वर्त्तमानोऽस्मानजीजनदिति बुद्धा वडवानलरूपेण वर्त्तमानं तं पर्य्युपासत इत्यर्थ। यद्वा अन्या एकधनाख्या आप: संयन्ति। चात्वालोत्करयोर्मध्ये वसतीवरीभि: सङ्गच्छन्ते। अन्या वसतीवर्य्याख्या आपश्चोपयन्ति। उपगच्छन्ति। ऐकमत्यं प्राप्ता भवन्ति। एताश्च मिलित्वा यज्ञं साधयन्त्यस्तत्साध्यवृष्टिद्वारा नद्यो भूत्वोर्वं पृणन्तीत्यादि समानम्। एवं हि आपो वा अस्पर्द्धन्त वय पूर्वं यज्ञ वच्यामः। ऐ० ब्रा० २।२०। इत्यादिकम् ब्राह्मणविनियोगश्चानुगृह्यते।

४। तमपांनपातमग्निमस्मेरा अस्मयमाना दर्परहिता युवतयो युवानं युवराजमिव मर्मृज्यमाना अत्यर्थमलङ्कुर्वाणा

आपः । स्रुज् शौचालङ्कारयोः । परि यन्ति । परितो गच्छन्ति प्राप्नुवन्ति । घृतनिर्णिक् चरणशीलोदकनिर्णेजनः । यद्वा निर्णिगिति रूपनाम । दीप्तरूपः सोऽपां नपादग्निरप्सु मेघान्तर्गतासु समुद्रगतासु वा मध्येऽनिध्म इन्धनरहित एव सन् अस्मे अस्माक रेवद्धनयुक्तमन्नं यथा भवति तथा शुक्रेभि' शुभ्रैर्निर्मलैः शिक्वभिस्तेजोभिर्दीदाय । दीप्यते ।

५ । नारीर्नैवग्रस्तिस्रो देवीर्देव्य इडासरस्वतीभारत्याख्या अव्यथायाव्यथनायास्मै देवायापानपातेऽन्नं सोमाख्यं दिधिषन्ति । धारयन्ति । धिष शब्दे जौहोत्यादिकः । व्यत्ययेनान्त्यादेशः । धातूनामनेकार्थत्वादत्र धारणार्थः । अप्सूदकेषु कृता इवोपप्रसस्रे । प्रसरन्ति । सृ गतौ । लिटोरयो रे इति रे आदेशः । छान्दसो हलादिशेषाभावः । यस्मादेव तस्मात् पूर्वसूनां पूर्वं ब्रह्मणः सकाशादुत्पन्नानामपा पीयूषं सारभूतम् सोमाख्यममृतं सोऽपांनपादग्निर्धयति । पिवति ।

६ । अत्रास्मिन्नपां नपात्संज्ञके देवेऽश्वस्य जनिम जन्म भवति अपा नप्त्रधिष्ठितात्समुद्रादुच्चैःश्रवसो जातत्वात् । किं बहुना ! अस्य च स्वः सुष्ठुरणीयस्य सर्वस्य जगतो जन्मास्मिन्नेव भवति । अयं हि मेघमध्ये वर्त्तमानो वृष्टिद्वारेण सर्वं जगज्जनयति । तादृशोऽपां नपात् त्वं द्रुह्वो द्रोग्धुरपहर्त्तु-

रिषो हिंसकस्य च सम्पृचः सम्पर्कात्सूरीन् स्तोतॄनस्मान् पाहि। रक्ष। आमास्वपरिपक्कासु पूर्षु पूरयितव्यास्वप्सु परः परस्ताद्वर्त्तमानमप्रमृष्यमप्रधृष्यमाणं देवमरातयोऽदातारः पुरुषा न विनशन्। न प्राप्नुवन्ति। नशतिर्व्याप्तिकर्मा। लेट्यड़ागमः। अनृतानि मायाविनो रक्षांसि च न प्राप्नुवन्ति।

७। योऽपा नपात् स्वे दमे स्वकीये गृहेऽन्तरिक्षलक्षण आसीदति। यस्य च धेनुर्माध्यमिका वाक् सुदुघा सुखेन दोग्धव्या भवति। स देवः स्वधा वृष्ट्युदकं पीपाय। वर्धयति। प्यायी वृद्धौ। लिड्यङोश्चेति पीभाव। सुभु सुष्ठु भूत वृष्टेः सकाशादुत्पन्नं हविर्लक्षणमन्नं चात्ति। भक्षयति। सोऽपांनपात्सत्रको देवो ऊर्जयन् बलं कुर्वन् अप्स्वन्तर्मेघस्थास्वप्सु मध्ये विधते परिचरते यजमानाय वसुदेयाय धनदानार्थं विभाति। विशेषेण दीप्यते।

८। योऽपांनपादृतावा। ऋतमित्युदकनाम। तद्वान् सत्यवान् वा अजस्रो नित्य एकरूपेण सदा वर्त्तमान उर्विया उरुर्विस्तीर्णोऽप्सु मेघस्थासु मध्ये शुचिना शोचकेन दैव्येन देवसम्बन्धिना तेजसा आ समन्ताद्विभाति। विशेषेण प्रकाशते। अस्यापां नपातोऽन्या अन्यानि भुवनानि सर्वाणि भूतजातानि वया इत् शाखा एव। वीरुध ओषधयः

प्रजाभि: स्वकीयाभि: पुष्पफलादिभि: सहास्मादेव प्रजायन्ते।

९। पूर्वोक्ते सारस्वतसत्रस्यापोनप्त्रीये चरावपां नपादा ह्यस्थादित्येषानुवाक्या। सूचितञ्च। अपां नप्त्रे चरुमपां नपादा ह्यस्थादुपस्थम्। आ० १२।६। इति।

अपां नपात्संज्ञकोऽग्निरुपस्थमपामुपस्थानमन्तरिक्षमा ह्यस्थात्। आस्थितवान् आरूढवान् खलु। किं कुर्वन्। जिह्मानां कुटिलगतीनामपां मध्ये ऊर्ध्व: स्वयमूर्ध्वं ज्वलन् विद्युतम् विद्योतमानं मेघं वसान आच्छादयन्। अन्तरिक्षमास्थाय वर्षणं कृतवान्। तस्य वर्षितुरपां नपातो ज्येष्ठं प्रशस्यतमं महिमानं माहात्म्यं वहन्तीर्वहन्त्य:। सर्वत्र प्रापयन्त्यो यह्वीर्यह्व्यो महत्यो हिरण्यवर्णा:। नदीनामैतत्। हिरण्यवन्निर्मलरूपा नद्य: परियन्ति। परितो गच्छन्ति। अपां नप्त्रा महती वृष्टिरस्माकं प्रवाहनायोत्पादितेति कृतज्ञतया तदीयं माहात्म्यं सर्वत्र प्रकटयन्त्य इव नद्य: प्रवहन्तीत्यर्थ:।

१०। सोऽपां नपात् हिरण्यरूप:। रूप्यत इति रूपं शरीरम्। सुवर्णमयशरीरो हितरमणीयशरीरो वा। तथा हिरण्यसंदृक्। सम्यक् पश्यन्तीति संदृश इन्द्रियाणि। सुवर्णमयेन्द्रियो हितरमणीयेन्द्रियो वा। सेदु स एवापां नपात् हिरण्यवर्णो हिरण्यसदृशकान्तियुक्त:। एवम्भूत: सन्

हिरण्ययात् सुवर्णमयाद्योनेः स्थानात् पर्य्युपरि निषद्योपविश्य राजत इति शेषः। अस्मा ईदृग्विधायापां नपाते हिरण्यदा दक्षिणारूपस्य सुवर्णस्य दातारो यजमाना अन्नं हविर्लक्षणं ददति। प्रयच्छन्ति॥

११। अस्यापांनपुर्देवस्यानीकं रश्मिसमूहरूपं शरीरं चारु शोभनम्। उत अपि च अस्य नाम संज्ञा च चारु शोभनं। न पातयति न विनाशयतीति नपातिति तद्व्युत्पत्तेः। तदुभयमपीच्यम्। अन्तर्हितनामैतत्। मेघान्तर्हितं मह-ईते। युवतयः सङ्गमनस्वभावा आपो हिरण्यवर्णं हिरण्य-समानतेजसं यमपांनपातमित्थामुत्रान्तरिक्षे समिन्धते। सम्यक् दीपयन्ति। अस्य च देवस्य घृत चरणशीलमुदक-मन्नं भक्ष्यम्। अविन्धनो ह्यसौ वैद्युतोऽग्निः॥

१२। अस्मै पुरोवर्त्तिने बहूना देवानामवमायाद्याय सख्येऽस्माभिः समानख्यानायापां नपाते यज्ञैर्यागसाधनैर्हविर्भिश्चरुपुरोडाशादिभिर्नमसा नमस्कारेण च विधेम। परि-चरेम। अस्यापां नपातः सानु समुच्छ्रितप्रदेशं संमार्ज्मि। सम्यक् शोधयामि अलङ्करोमि वा। मृजू शौचालङ्कारयोः। चादिलोपे विभाषेत्यस्य निघातप्रतिषेधः। दिधिषामि धारयामि च विल्मैर्भासनैः काष्ठैरेनम्। धिष शब्दे। अयं धारणार्थोऽपि। जुहोत्यादित्वात् शपः श्लुः। मिपो व्यत्य-

येनाड़ागमः। अभ्यस्तानामादिरित्याद्युदात्तत्वम्। दधामि धारयामि चेन गार्हपत्यादिरूपेणाग्नेर्हविर्लक्षणैः। तथा ऋग्भिर्मन्त्रैः परिवन्दे। परितः स्तौमि।

१३। स ईं सोऽयमपानपात्संज्ञको देवो वृषा सेक्ता भूत्वा तासु मेघस्थास्वप्सु गर्भमजनयत्। स्वात्मानमेव गर्भरूपेण वर्षणार्थं कृतवानित्यर्थः। गर्भो भूत्वा च स ईं सोऽय माध्यमिको वैद्युतोऽग्निस्तासां शिशुः पुत्रः सन् धयति। मेघस्थास्ताः पिबति। अविन्धनो ह्यसौ। तं पुनस्थानीयमङ्गिरापश्च रिहन्ति। लिहन्ति। लिह आस्वादने। कपिलकादित्वाल्लत्वविकल्पः। सोऽयमपांनपात् वृष्ट्या सह भूमौ निपतितोऽनभिम्लातवर्णः। अभितो म्लातो म्लानः क्षीणो वर्णो यस्य तद्विपरीतोऽत्यर्थं दीप्यमानः सन् इहास्मिन् लोकेऽन्यस्येव। इव शब्दोऽवधारणे। अन्यस्य पार्थिवस्यैवाग्नेस्तन्वा शरीरेण काष्ठेन्धनलक्षणेन विवेष। व्याप्तो बभूव। विष्लृ व्याप्तौ।

१४। परम उत्कृष्टेऽस्मिन्पदेऽन्तरिक्षलक्षणे स्थाने तस्थिवांसं स्थितवन्तमध्वस्मभिर्ध्वंसनरहितैस्तेजोभिर्विश्वहा सर्व्वाण्यहानि दीदिवांसं दीप्यमानमपां नपातं यह्वीर्यह्वो महत्य आपः स्वयमात्मनैवात्कैरतनशीलैः सततगन्तृभिः स्वकीयै रूपैः परिदीयन्ति। परिगच्छन्ति। दीयति-

गतिकर्म्मा। दीङ् चये। व्यत्ययेन परस्मैपदम्। किं कुर्व्वत्यः। नप्त्रेऽपा नपाते घृतं चरणशीलोदकात्मकमन्नं वहन्तीर्वहन्त्यः।

१५। हे अग्ने सुच्चिति शोभननिवासं त्वामयासम्। उपागच्छम्। किमर्थम्। जनाय। अस्मदीयपुत्रादिजननार्थम्। तथा मघवद्भ्यो हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यश्च सुवृक्तिं शोभनावर्जकं त्वद्विषय स्तोत्रमयासम्। उपागच्छम्। यम उपरमे। अतः कारणाद् यद्भद्रं सर्वे देवा अवन्ति रक्षन्ति विश्वं सर्वं तद्भद्रमस्माक भवतु। सुवीराः सुपुत्रा वयं विदथे यज्ञे गृहे वा बृहत् प्रौढ़ स्तोत्रं वदेम। उच्चारयाम।

------

# MITRA III. 59.



मित्रो जनानिति नवर्चं षष्ठं सूक्तं वैश्वामित्रं त्रैष्टुभं मैत्रम्। मित्रो मैत्रं चतुर्गायत्र्यान्तमित्यनुक्रमणिका। आदितः पञ्च त्रिष्टुभः शिष्टाश्चतस्रो गायत्र्यः। मित्रो देवता। अग्निहोत्रार्थे पयसि वर्षबिन्दुपतने मित्रो जनानित्यनया समिधमादध्यात्। सूत्रितं च। मित्रो जनान्यातयति ब्रुवाण इति समिदाधानमिति।

१। ब्रुवाणः स्तूयमानः शब्दं कुर्वाणो वा मित्रः। प्रकर्षेण सर्वैर्मीयते त्रायते तथा सर्वान् वृष्टिप्रदानेन त्रायत इति वा मित्रः सूर्यः। जनान् कर्षकादिजनान्यातयति कृष्यादिकर्मसु प्रयत्नं कारयति। तथा मित्र एव पृथिवीम् उत अपि च द्यामेतावुभौ लोकौ वृष्टिद्वारान्नं यागांश्च जनयन् दाधार धारयति। तथा सति मित्रः अनिमिषा अनिमिषेणानुग्रहदृष्ट्या कृष्टीः कर्मवतो मनुष्यानभिचष्टे सर्वतः पश्यति। एतत्सर्वं ज्ञात्वा हे ऋत्विजो घृतवदुपस्तरणाभिघारणयुक्तं

हव्यं हवनयोग्यं पुरोडाशादिकं तस्मै मित्राय देवाय जुहोत जुहुत प्रयच्छतेत्यर्थः। उक्तार्थं यास्को ब्रवीति। मित्रो जनान्यातयति ब्रुवाणः शब्दं कुर्वन्। मित्र एव धारयति पृथिवीं च दिवं च। मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति। कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा। मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम्। जुहोतिर्दान-कर्मेति। यातयति। यती प्रयत्न इत्यस्य ण्यन्तस्य लटि-रूपम्। दाधार तुजादीनामित्यभ्यासस्य दीर्घः। जुहोत। जुहोतेर्लोटिप्रत्ययस्य तबादेशः गुणः निघातः।

२। देवसुवां हविःषु मित्रस्य सत्यस्य प्र स मित्रेति याज्या। एषैव प्रातर्होमस्य कालात्ययनिमित्ते मैत्रे चरौ याज्या। सूत्रितं च। प्र स मित्र मर्त्तो अस्तु प्रयस्वान्स्त्वा नष्टवान्महिमाय पृच्छत इति। तत इष्टिर्मित्रः सूर्योऽभि यो महिना दिवं प्र स मित्र मर्त्तो अस्तु प्रयस्वानिति संस्थितायामिति च।

हे आदित्य व्रतेन यज्ञेन युक्तो यो मनुष्यस्ते तुभ्य शिक्षति चविर्लक्षणमन्नं ददाति। हे मित्र स मर्त्तो मनुष्यः प्रयस्वान् अन्नवान् प्र अस्तु प्रभवतु। त्वोतस्त्वया रक्षित स मनुष्यः केनापि न हन्यते न बाध्यते न जीयते नाभिभूयते च। एनं तुभ्यं हविर्दत्तवन्तं पुरुषमंहः पाप-

मन्त्रितः समीपान्नाश्नोति न प्राप्नोति दूरादपि न प्राप्नोति । ध्रियतिर्दानकर्मा । व्यत्ययेन परस्मैपदम् । यद्वृत्तयोगादनिघातः । जीयते । जयतेः कर्मणि यक्सार्वधातुकयोरिति दीर्घः । त्वोतः । तृतीया कर्मणीति पूर्वपदस्वरः । अश्नोति । अशू व्याप्तौ । स्वादिः । व्यत्ययेन परस्मैपदम् ।

३ । देवसुवा हविःषु मित्रस्य सत्यस्यानुवाक्या । अनमीवास इळया मदन्तः प्र स मित्र मर्त्तो अस्तु प्रयस्वानिति सूत्रितम् ।

हे मित्र अनमीवासो रोगवर्जिता इडयान्नेन मदन्तो माद्यन्तः पृथिव्याः वरिमन्विस्तीर्णे प्रदेशे मितज्ञवो मितजानुका आ यथाकामं सर्वत्र गच्छन्त आदित्यस्य सम्बन्धि व्रतं कर्मोपक्षियन्तः तस्य कर्मणः समीपे निवसन्तस्तदीयं कर्म कुर्वाणा इत्यर्थः । तादृशा वयं मित्रस्यादित्यस्य सुमतौ शोभनायामनुग्रहबुद्धौ स्याम वर्त्तेमहि । मदन्तः । मदी हर्षे इत्यस्य शतरि व्यत्ययेन शप् । मितज्ञवः । जानुशब्दस्य ज्ञुश्छान्दसः । वरिमन् । उरुशब्दात्पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिना वरादेशः । सुपां सुलुगिति सप्तम्या लुक् । व्यत्ययेनाद्युदात्तः ।

४ । अयं पूर्वमन्त्रे प्रतिपादितो मित्रः सूर्यः नमस्यः सर्वैर्नमस्करणीयः सुशेवः शोभनसुख । सुखेन सेव्य इत्यर्थः ।

राजा सर्वस्य जगतः प्रकाशप्रदानेन स्वामी सुचत्रः। चत्र-शब्देन बलमुच्यते। शोभनबलोपेतः वेधाः सर्वस्य जगतो विधाता एवगुणोपेतः सूर्यः अजनिष्ट प्रादुरभूत्। तस्यैव-विधगुणोपेतस्य यज्ञियस्य यज्ञार्हस्य सूर्यस्य सुमतौ शोभनायां बुद्धौ भद्रे कल्याणकारिणि सौमनसे सौमनस्ये अपि यजमाना वयं स्याम भवेम। नमस्यः। नमसि साधुः। तत्र साधुरिति यत्। तित्स्वरितः। अजनिष्ट। जनीं प्रादुर्भाव इत्यस्य लुङि सिचि रूपम्। सौमनसे। सुमनस इदमित्यर्थे तस्येदमित्यण्। प्रत्ययस्वरः।

५। योऽयमादित्यो महानत एव नमसा नमस्कारेण उपसद्यः सर्वैरुपसदनीयः यातयज्जनः प्रातः प्रातः स्वस्व-कर्मणि प्रवर्त्तनीया जना येनेति। स तथोक्तः। गृणते स्तोत्र कुर्वते जनाय सुशेवश्च भवति तस्मै पन्यतमाय स्तुत्यतमाय मित्राय आदित्याय जुष्टं प्रीतिविषयमेतद्धवि-रग्नौ आ जुहोत जुहुत। यातयज्जनः। यती प्रयत्न इत्यस्य एयन्तस्य शतरि रूपम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरे प्राप्ते मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम्। गृणते गॄ शब्दे। शतुरनुम इति विभक्तेरुदात्तत्वम्। पन्यतमाय। पनते-रघ्न्यादित्वाद्यत्। यतो नाव इत्याद्युदात्तत्वम्। जुष्टम्। नित्यं मन्त्र इत्याद्युदात्तत्वम्।

६। अभिप्लवषडहे दशरात्रे च सप्तदशैकविंशादिस्तोमे सति होत्रादिकशस्त्रेष्वावापस्थाने पञ्चसप्तादिसङ्ख्याका ऋच आवपनीयाः। तत्र मैत्रावरुणशस्त्रे मित्रस्य चर्षणीधृत इत्याद्यास्तस्र आवापार्थाः। सूत्रितं च। मित्रस्य चर्षणीधृत इति चतस्रो मैत्र इति।

चर्षणीधृतो मनुष्याणां वृष्टिप्रदानेन धारकस्य मित्रस्य देवस्य सम्बन्धि अवः अन्नं सानसि सर्वैः सम्भजनीयं द्युम्नं तदीयं धनं च चित्रश्रवस्तममतिशयेन चायनीयकीर्त्तियुक्तम्। सानसि। सनोतेः सानसिपर्णसीत्यादिनासिच्प्रत्ययान्तत्वेन निपातनादुपधावृद्धिः। चित्त्वादन्तोदात्तः। स्वमोरिति स्वमोर्लुक्।

७। प्रातर्होमस्य कालात्यये मैत्रेष्टिः। तस्यामभि यो महिनेत्यनुवाक्या। सूत्रितं च। अभि यो महिना दिवं प्र स मित्र मर्त्तो अस्तु प्रयस्वानिति।

यो मित्रो महिना स्वकीयेन महिम्ना दिवमन्तरिक्षमभि बभूव अभिभवति स मित्रः सप्रथाः। प्रथः प्रसिद्धिः कीर्त्तिः। तत्सहितः श्रवोभिः वृष्टिद्वारोत्पादितैरन्नैः पृथिवीमभि अभिभवति बह्वन्नयुक्तां करोतीत्यर्थः। सप्रथाः। प्रथ प्रख्याने। असुन्। वोपसर्जनस्येति सहस्य सभावः।

८। पञ्च जनाः निषादपञ्चमाश्चत्वारो वर्णा अभिष्टि-शवसे शत्रूणामभिगन्तृबलयुक्ताय मित्राय येमिरे हवींषु-द्यच्छन्ति। स तादृशो मित्रः विश्वान् सर्वान्बिभर्त्ति स्वस्व-रूपतया धारयति। अभिष्टिशवसे। इषेर्मन्त्रे वृषेत्यादिना क्तिन्। तादौ च नितीत्यभेरन्तोदात्तत्वम्। शकन्ध्वादित्वात् पररूपत्वम्। बहुव्रीहौ पूर्वपदस्वरः।

९। मित्रो भगवानादित्यो देवेषु द्योतमानादिगुण-युक्तेषु आयुषु मनुष्येषु मध्ये यो जनः वृक्तबर्हिः। वृक्तं लून बर्हिर्येन सः। बर्हिर्लवनासादनपूर्वं हविषो दाता ऋत्वि-गित्यर्थः। तस्मै वृक्तबर्हिषे जनाय इष्टव्रताः इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिध्यन्ति ता इषः तादृशान्यन्नानि अकः करोति तस्मै ददातीत्यर्थः। वृक्तबर्हिषे। ओव्रश्चू छेदने। कर्मणि निष्ठायां यस्य विभाषेतीट्प्रति-षेधः। बहुव्रीहौ पूर्वपदस्वरः। अकः। करोतेर्लुङि च्लेर्मन्त्रे घसेत्यादिना लुक्। सिपो हल्ङ्यादिलोपः। निघातः।

—o—

# BRHASPATI IV 50.

यस्तस्तम्भेत्येकादशर्चं पञ्चमं सूक्तं वामदेवस्यार्षं त्रैष्टुभम्। दशमी जगती। दशम्येकादश्याविन्द्राबृहस्पतिदेवताके शिष्टा अत्र बार्हस्पत्यः। अत्रानुक्रमणिका यस्तस्तम्भैकादश बार्हस्पत्यमन्त्ये ऐन्द्र्यौ चोपान्त्या जगती। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः स्तोमवृद्धाविदं सूक्तमावापार्थम्। तथा च सूत्रम्। यस्तस्तम्भ यो अद्रिभित् इति। आद्ये बृहस्पतिसवने मरुत्वतीयनिष्केवल्ययोः सूक्त मुखीये। सूत्रितं च। यस्तस्तम्भ बृहस्पतय इति सूक्तमुखीये। आ० ९।५ इति।

१। यो बृहस्पतिर्बृहतो देवस्य यज्ञस्य वा पालयिता देव सहसा बलेन ज्मः पृथिव्या अन्तान्। दश दिश इत्यर्थः। तान्वि तस्तम्भ। विविध स्तम्भितवान्। नियमितवान्। त्रिषधस्थस्त्रिषु स्थानेषु वर्त्तमानो रवेणैवं

तिष्ठतीत्यनेन शब्देन तं देवं प्रत्नासः पुराणा ऋषयोऽतीन्द्रिय-द्रष्टारो दीध्याना दीप्यमाना विप्रा मेधाविनो यजमानादयः पुरो दधिरे। पुरस्तात् स्थापितवन्तः स्तुत्यादिना। मन्द्र-जिह्वं मादनजिह्वं मोदनजिह्वम्।

२। हे बृहस्पते धुनेतयः। धुना शत्रूणां कम्पयित्रीति-र्गतिर्येषां ते। तादृशाः सुप्रकेतं शोभनप्रज्ञं त्वा मदन्तो मादयन्तो नोऽस्मत्सम्बन्धिनो य ऋत्विजोऽभि ततस्रे आत्मानमुपचिपन्ति स्तुवन्ति वा अस्यैषा योनिं कारणं यज्ञं यजमानं वा मां रक्षतात्। रक्ष। योनिर्विशेष्यते। पृषन्तं फलानि सिञ्चन्तं सृप्र सर्पणस्वभावमदब्धमहिंसितमूर्व-मुरुम्।

३। बृहस्पते येत्यादिके द्वे वार्हस्पत्ये पशौ वपापुर-डाशयोरनुवाक्ये। बृहस्पते या परमा परावदिति द्वे। आ० ३।७। इति हि सूत्रितम्।

हे बृहस्पते या प्रसिद्धा परमोत्कृष्टा परावदत्यन्तं दूरभूता वसतिः स्वर्गाख्यास्ति। यद्वा लिङ्गव्यत्ययः। परमं स्थानमस्ति। अतोऽस्माद्देशादा। आ इत्यर्वागर्थे। अधस्तात्ते तव सम्बन्धिन ऋतस्पृशो यज्ञं स्पृशन्तोऽश्वा नि षेदुः। निषण्णा भवन्ति। तुभ्यं खाता अवताः। लुप्तोपमैषा। यथा खाताः कूपाः अभितः श्चोतन्ति तद्वदद्रिदुग्धा ग्रावभि-

रभिषुताः सोमा विरप्शं विशेषेण शब्देन स्तोत्रं यथा भवति तथा मध्वो मधुररसं श्चोतन्ति । स्रवन्ति ।

४ । अथ बृहस्पतिर्मन्त्राभिमानो देवो महो महतो ज्योतिषो दीप्तस्यादित्यस्य परमे निरतिशये व्योमन् व्योमनि प्रथमं जायमानः प्रादुर्भवन् सप्तास्यः सप्तच्छन्दोमयमुखस्तु-विजातो बहुप्रकार सम्भूतो रवेण शब्देन सप्तरश्मिः सर्पणस्वभावतेजोयुक्तस्तमांसि व्यधमत् । धमतिर्गतिकर्मेति निरुक्तम् ६।२ । विविध गच्छति । नाशयतीत्यर्थः ।

५ । स बृहस्पतिः सुष्टुभा शोभनस्तुतिमतर्क्वता दीप्ति-मता गणेनाङ्गिरसा रवेण शब्देन च सह फलिगम् । ञिफला विशरणे । फलिर्भेदः । तेन गच्छतीति फलिगम् । बलं बलनामानमसुर रुरोज । बभञ्ज । द्वितीयः सशब्दः पूरणः । स एव देव उस्त्रिया भोगानामुत्स्राविणीर्हव्यसूदः चीरादि-हविष्प्रेरिका वावशतीर्वावश्यमाना गा कनिक्रदत् शब्द कुर्वन्नुदाजत् । उद्घाटयति स्म ।

६ । एवा पित्र इति बार्हस्पत्ये पशौ हविषो याज्या । एवा पित्रे विश्वदेवाय वृष्णे विश्वे अद्य मरुतो विश्व ऊती । आ० ३।७ । इति सूत्रितत्वात् । अग्निष्टोमे वैश्वदेवशस्त्र एषैव धाय्या । तथा च सूत्रम् । एवा पित्रे विश्वदेवाय वृष्ण आ नो भद्राः क्रतवो यन्तु विश्वतः । आ० ५।१८ । इति ।

पित्रे पालकाय विश्वदेवाय सर्वदेवतारूपाय। देवानां मन्त्रप्रतिपाद्यत्वादस्य च मन्त्राभिमानित्वाद्विश्वदेवत्वम्। यद्वा। अत्र देवशब्दः स्तुत्यर्थः सर्वैः स्तुत्याय वृष्णे वर्धकाय बृहस्पतये देवायैवैवमुक्तप्रकारेण यज्ञैस्तत्साधनैर्हविर्भिराज्य-चर्वादिलक्षणैर्नमसा स्तुत्या च विधेम। परिचरेम। हे बृहस्पते सुप्रजाः शोभनपुत्रा वीरवन्तो वीर्योपेता वयं रयीणां धनानां पतयः स्याम।

७। इदमाद्यृक्त्रयं पुरोहितप्रशंसेति ब्राह्मणम्। ऐ० ब्रा० ८।२६ अथवा सूक्तस्य ऋग्द्वयवर्जितस्य बार्हस्पत्यत्वा-द्बृहस्पतेरेव स्तुतिः। स इत्स एव राजा मूर्धाभिषिक्तोऽन्यो वा राजमानः प्रतिजन्यानि। जन्यं युद्धं प्रति बलानी-त्यर्थः। प्रत्यर्थिजनपदानि वा। तानि विश्वा सर्वाणि शुष्मेण बलेन वीर्येण शरीरसामर्थ्येन वाभि अभिगम्याक्रम्य तस्थौ। तिष्ठति। स इत्युक्तं क इत्याह। यो बृहस्पतिं बृहतां महतां पालयितारं देवमुक्तलक्षणं पुरोहितं वा सुभृतं सुष्ठु हविः-स्तोत्रादिनान्नाच्छादनादिना वा बिभर्ति भरति। वल्गूयति स्तौति। वन्दते नमस्करोति च पूर्वभाजमितरेभ्यः प्रथम-सम्भक्तारम् कृत्वा। एवं यः करोति स एव तस्थाविति।

८। स इत्स एव क्षेति। निवसति। सुधितः सुष्ठु तृप्तः सन् स्वे स्वकीय एवौकसि सदने। स एव सम्यग्

निर्बाधः सन् सुखेनास्ते। तस्मा इड़ा भूमिर्विश्वदानीं सर्वकालं पिन्वते। वर्धते फलै.। तस्मै विशः प्रजाः स्वयमेव नमन्ते। प्रणता भवन्ति। दण्डनमन्तरेण स्वयमेव दत्तकरा भवन्ति। यस्मिन्राजनि ब्रह्मा पूर्वः प्रथमं पूज्यः सन्नेति। गच्छति। वर्त्तत इत्यर्थः।

९। स एवाप्रतीतोऽन्यैरप्रतिगतः सन् यानि धनानि प्रतिजन्यानि प्रतिस्पर्धिजनसम्बन्धीनि उतापि च सजन्या जनसम्बन्धीनि धनानि सञ्जयति। यो राजावस्यवेऽवसीयसे धनरहिताय रक्षणमिच्छते ब्रह्मणे ब्राह्मणाय वा प्रीणनमिच्छते बृहस्पतये वा वरिवो धनं कृणोति। करोति। ददाति। स उक्तप्रकारेण महान् भवति। तमेव देवा अवन्ति। रक्षन्ति।

१०। इन्द्रश्च सोममिति दशमी तृतीयसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या। सूत्रितं च। इन्द्रश्च सोमं पिबतं बृहस्पत आ वो वहन्तु सप्तयो रघुष्यदः। आ० ५।५। इति।

हे बृहस्पते त्वमिन्द्रश्च सोमं पिबतम्। कीदृशौ युवाम्। अस्मिन् यज्ञे मन्दसाना हृष्यन्तौ वृषण्वसू वर्षितृधनौ। यजमानेभ्यो दीयमानधनावित्यर्थः। वां युवां स्वाभुवः सुष्ठु सर्वतो भवन्तः। कृत्स्नशरीरव्यापनसमर्था इत्यर्थः। तादृशा इन्दवः सोमा विशन्तु। युवयोः शरीरं प्रविशन्तु। अस्मे

अस्मभ्यं रयिं धनं सर्ववीरं सर्वपुत्राद्युपेतं नि यच्छतम्। दत्तम्।

११। हे बृहस्पते हे इन्द्र युवां नोऽस्मान् वर्धतम्। वर्धयतम्। प्रवृद्धान् कुरुतम्। सा सुमतिर्युवयोरनुग्रहबुद्धिरस्मे अस्मासु सचा सह भूतु। भवतु। धियः कर्माण्यविष्टम्। रक्षतम्। पारं नयतम्। पुरंधीः पुरं शरीरं धीयते स्थाप्यते याभिर्मतिभिस्ता स्तुतीर्जिगृतम्। प्रबुध्यतम्। वनुषा सम्भक्तृणामस्माकमर्यो गम्भीररातीः। शत्रूनित्यर्थः। जजस्तम्। युध्यतम्। क्षपयतमित्यर्थः। छन्दस्यरातिशब्दः। स्त्रीलिङ्गः। एवं स्तुतिं निगमय्याभीष्टं प्रार्थितवान्।

---

# USAS IV. 5I.



अथाष्टमं व्याख्यातुमारभते। इदमुत्यदित्येकादशर्चं षष्ठं सूक्तं वामदेवस्यार्षं त्रैष्टुभमुषोदेवताकम्। इदमुषस्यं त्वित्यनुक्रान्तम्। प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे च्छन्दस्याश्विनशस्त्र इदं सूक्तम्। सूत्रितं च। उषो वाजेनेदमु त्यत्। आ० ४।१४। इति।

१। इदमु पुरतो दृश्यमानमिद त्यत्तदस्माभिः स्तुत्यं सर्वप्रसिद्धं पुरुतममत्यन्तप्रभूत ज्योतिस्तेजो वयुनावत्। वेतिः कान्तिकर्मण इदम्। प्रकृष्टकान्तिमत्। अथवा वयुनमिति प्रज्ञानाम। प्रज्ञोपेतम्। सर्वस्य प्रज्ञापकमित्यर्थः। कीदृक् तेजः। पुरस्तात् पूर्वस्याम् दिशि तमसोऽन्धकारादस्थात्। उदतिष्ठत्। एवं सति नूनं सत्य दिव आदित्यस्य दुहितरो दुहितृस्थानीया विभातीर्विभानम् कुर्वतीरुषसो जनाय यजमानानां गातुं गमनं गमनादिव्यापारसामर्थ्यं कृणवन्। अकुर्वन्।

२ । चित्रा ग्रायनीया उषसः पुरस्तात् पूर्वस्यां दिश्यस्थुः । तिष्ठन्ति । व्याप्ता इत्यर्थः । तत्र दृष्टान्तः । अध्वरेषु मिता खाताः स्वरवो यूपा इव । ते यथा वेद्याः पुरतो भासन्ते तद्वत् । यद्यपि स्वरुशब्दो यूपच्छेदपतितप्रथमशकलवाची यः प्रथमः शकलः परापतत् स स्वरुः कार्य्यः इत्युक्तत्वात् तथाप्यत्र मितशब्दश्रवणाच्चषालवन्तः स्वरवः । ऋग्वे० ३।८।१० इत्यादौ तथा दर्शनाच्चात्र यूपवचनः । ता व्रजस्य वारकस्य तमसो द्वारा द्वाराणि वृच्छन्तीः शुचयो दीप्ताः पावकाः शोधिका अश्रन् । व्यहणन् ।

३ । अद्यास्मिन्दिन उच्छन्तीस्तमो विवासयन्त्यो मघोनीर्धनवत्य उषसो भोजान् भोजयितॄन् यजमानान् तेषां राधोदेयाय सोमादिधनदानाय चितयन्त । प्रज्ञापयन्ति । अचित्रेऽचायनीये तमसो विमध्ये । अत्यन्तगाढान्धकार इत्यर्थः । तत्र पणयो वणिज इवादातारोऽबुध्यमानाः ससन्तु । स्वपन्तु ।

४ । हे देवीर्द्योतमाना उषसो वो युष्मान् सनयः पुराणो नवो वा यामो गमनसाधनः स रथोऽद्यास्मिन्यागदिने कुविद्बहुवार बभूयात् भवेत् । गच्छेदित्यर्थः । येन रथेन हे रेवतीर्धनवत्यो यूयं नवग्वे दशग्वे समारब्धसप्तच्छन्दोयुक्तमुखेऽङ्गिरेऽङ्गिरोगणे । तौ द्वौ तत्र येऽप्यङ्गिरसस्तेषां

गणे। तथान्यत्र नवग्वो नु दशग्वो अङ्गिरस्तमः। ऋ० १०।६२।६। इति रेवद्धनवद्यथा भवति तथोष। विभातं छतवत्यः। वसे व्युच्छनकर्मणो लिण्मध्यमबहुवचनस्येदं रूपम्।

५। हे देवीर्द्योतमाना उषसो यूयं हि खलु ऋत युग्भिः यज्ञगामिभिरश्वैर्भुवनानि सद्यः परिप्रयाथ। परित. प्रकृष्ट गच्छथ। किं कुर्वत्यः। ससन्तं स्वपन्तं द्विपाच्चतुष्पा- न्मनुष्यगवादिलक्षणं जीवं चरथाय चरणाय गमनादिव्यव- हाराय प्रबोधयन्तीः प्रबोधयन्त्यः सत्यः परिप्रयाथ।

६। आसामुषसां मध्ये क्व स्विदभूदद्य कतमा पुराणी पुरातनी। यया ऋभूणां सम्बन्धीनि विधाना चमसादि- निर्माणानि विदधुः। अकुर्वन्नृभवः। यद्यास्वोषसः शुभ्रा दीप्ताः शुभं चरन्ति। शोभां दीप्तिं कुर्वन्ति। ता अजुर्या अशीर्णा नित्यनूतना न वि ज्ञायन्ते। यत' सदृशीः सदृश्यः सर्वेष्वपि दिवसेष्वेकरूपा अतोऽद्यतन्य एता एताः पुराण्य इति न ज्ञायन्ते। उषासादृश्यं सदृशीरद्य सदृशीरिदु श्व.। ऋ० १।१२३।८। इत्यत्र प्रतिपादितम्।

७। ता घ। घेति प्रसिद्धौ। ताः खलूपकारिण्यस्ता भद्राः कल्याण्य' स्तुत्या वा उषसः पुरा पूर्वमासुः। अभवन्। अभिष्टिद्युम्नाः अभिगमनमात्रेण द्युम्नं धनं यासां ता.।

ऋतजातसत्याः। ऋतार्थं यज्ञार्थं जाताश्च ताः सत्याः सत्यफलाश्च ताभ्यः। यासूषः स्वोजानो यागं कुर्वाण उक्थैः शस्त्रैः शशमानः शंसमानः स्तुवन् सामभिः स्तोत्रं निष्पादयन् शंसन् शस्त्राणि कुर्वन् द्रविणं धनं सद्य आप। प्राप्नोति। ता भद्रा इति सम्बन्धः।

८। ता उषस आ सर्वतश्चरन्ति। समना सर्वतः समानाः पुरस्तात् पूर्वस्याम् दिशि समानतः समानादेशादन्तरिक्षात् समना सर्वतः पप्रथानाः प्रथमाना ऋतस्य यज्ञस्य सदसः सदः। तत्रत्यस्त्विग्यविरादिकमित्यर्थः। बुधाना बोधयन्त्यः। अन्तर्भावितण्यर्थोऽयम्। एव महानुभावा उषसो जरन्ते। स्तूयन्ते। गवा सर्गा न उदकाना सृष्टय इव। गवां सर्गा न रश्मयः। ऋ० ४।५२।५। इति हि श्रुतम्। ता यथा सर्वत्र प्रसङ्गादुपकारत्वाच्च स्तूयन्ते तद्वत्।

९। ता एवोषसः। इदिति पूरणः। नु अद्य समना समानाः। एकधेत्यर्थः। समानीरेकरूपा अमीतवर्णा अहिंसितवर्णा अपरिमितवर्णा वा उषसश्चरन्ति सर्वतः। अभ्वं। महन्नामैतत्। अतिमहदसितं कृष्णं रूपं गूहन्तीर्गोपयन्त्यो रुशद्भीरोचमानैस्तनूभिः स्वशरीरैः शुक्रा दीप्ताः शुचयः शुद्धा रुचाना रोचमाना रोचयन्त्यो वा।

१०। हे दिवो दुहितरो द्योतमानस्यादित्यस्य दुहितृस्थानीया विभातीर्विभात्यो विशेषेण भानं कुर्वत्योऽस्मासु प्रजावन्तं रयिं पुत्राद्युपेतं धनं यच्छत। दत्त। हे देवी देव्यः स्योनात् सुखान्निमित्तभूताद्वो युष्मान् प्रतियुध्यमानाः प्रतिवोधयन्तो वयं सुवीर्य्यस्य पतयः स्याम। पुत्रादिसहितस्य धनस्य पालका भवेम।

११। तद्वो दिव इति व्युष्टायाम् जपेत। हे दिवो दुहितरो हे उषसो विभातीर्वो युष्मान् तदुत्तरार्धप्रथमपादेन वक्ष्यमाणं फलं यज्ञकेतुः। यज्ञ एव केतुः प्रज्ञापको यस्य तादृशोऽहमुप ब्रुवे। उपेत्य ब्रवीमि। अथ बहुवदुच्यते। वयं सुवन्तो जनेष्वस्मत्समानेषु मध्ये यशसः कीर्त्तेरन्नस्य वा स्वामिनः स्याम। तद्यशो द्यौः पृथिवी च देवी धत्ताम्। धारयताम्॥

—o—

# AGNI V. 11.



जनस्य गोपा इति षडृचमेकादशं सूक्तमात्रेयस्य सुतंभरस्यार्षं जागतमाग्नेयम्। तथा चानुक्रान्तम्। जनस्य षट् सुतंभरो जागतमिति। प्रातरनुवाक आश्विनशस्त्रे चास्य सूक्तस्य विनियोगः। जनस्य गोपास्त्वामग्न ऋतायवः। आ० ४।१३। इति।

१। जनस्य गोपा गोपायिता रक्षिता जागृविर्जागरणशीलः सदा प्रबुद्धः सुदक्षः सुबलः सर्वैः श्लाघनीयबल. सोऽग्निर्नव्यसे नवतराय सुविताय लोकानाम् कल्याणायाजनिष्ट। जातः। घृतप्रतीको घृतेन प्रज्वलिताङ्गो बृहता महता दिविस्पृशाभ्रलिहेन तेजसा युक्त' शुचिः शुद्ध एवंविधोऽग्निर्भरतेभ्य ऋत्विग्भ्यस्तदर्थं द्युमद्दीप्तिमद्यथा भवति तथा वि भाति। प्रकाशते। गोपाः। गुपू रक्षणे। आयप्रत्ययः। गोपायतेः क्विप्। परत्वादतो लोपः। अत्र परत्वादपृक्तलोपे कृते वर्णाश्रयत्वात् प्रत्ययलक्षणाभावेन यलोपो न स्यात्। लोपो

व्योर्वलीति प्रथम लोपग्रहणात् ज्ञापकात् यलोप एव भवति। लोपाजादेशस्य यलोपविधिं प्रति न स्थानिवद्भावः। प्रत्ययस्वरः। जागृविः। जागृ निद्राक्षये। जॄशॄस्तॄजागृभ्यः क्विन्निति क्विन्प्रत्ययः। जाग्रोऽविचिणल्ङित्स्विति प्रतिषेधाद्गुणाभावः। नित्त्वादाद्युदात्तः। सुदक्षः। आद्युदात्त द्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वम्। सुविताय। तन्वादीनाम् च्छन्दस्युपसंख्यानमिति सोरुवडादेशः। सूपमानात् क्त इत्युत्तरपदान्तोदात्तत्वम्। नव्यसे। नवशब्दादतिशायनेऽर्थे ईयसुन् प्रत्यय। ईकारलोपश्छान्दसः। अतो लोपः। आद्युदात्तः। दिविस्पृशा। हृद्युभ्याम् ङेरुपसख्यानमित्यलुक्। कृदुत्तरपदप्रकृतिस्वरत्वम्। द्युमत्। ह्रस्वनुड्भ्याम् मतुबिति ह्रस्वात्परस्य मतुपोऽन्तोदात्तत्वम्।

२। नर ऋत्विजो यज्ञस्य यागस्य केतुं प्रज्ञापकं पुरोहितं यजमानैः पुरस्कृतमिन्द्रेण देवैश्च सरथं तेषा मान्यत्वात् समानरथमग्निं त्रिषधस्थे त्रिस्थाने विहारप्रदेशे प्रथमं समीधिरे। समैन्धन्त। सुक्रतुः शोभनकर्म्मा होता देवनामाह्वाता सोऽग्निर्वर्हिषि वर्हिर्युक्ते तस्मिन् स्थाने यजनाय यज्ञाय नि षीदत्। प्रतिष्ठितोऽभवदिति यावत्। केतुम्। कित् ज्ञाने। औणादिक उप्रतयः। अन्तोदात्तः। पुरोहितम्। पुरोऽव्ययमिति गतिसंज्ञायाम् गतिरनन्तर

इति पूर्व्वपदप्रकृतिस्वरत्वम्। त्रिषधस्थे। आहवनीयादिलक्षणेन त्रिप्रकारेणानेन सह तिष्ठतीति त्रिषधस्थः। सधमादस्थयोश्छन्दसीति सधादेशः। कृदुत्तरपदप्रकृतिस्वरत्वम्। सीदत्। सदेः पाघ्रादिना सीदादेशः। बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः। पादादित्वान्निघाताभावः। यजथाय। यजेरौणादिकोऽथप्रत्ययः। प्रत्ययस्वरेण मध्योदात्तः।

२। हे अग्ने मात्रोररण्योः। स्वजननिमित्तादरणी मातराविल्युच्येते। ताभ्यामसंस्पृष्टोऽबाधित एव जायसे। प्रादुर्भूतो भवसि। मन्द्रः सर्वैः स्तुत्यः कविः क्रान्तः सर्वत्र व्याप्तः। अथवा मेधावी शुचिस्त्वं विवस्वतोऽग्निहोत्राद्यर्थं गृहे विशेषेण वसतो यजमानादुदतिष्ठः। उदितोऽभवः। पूर्वं महर्षयस्त्वा त्वां घृतेनावर्धयन्। वृद्धिमनयन्। हे आहुत आहुतिभिर्हुत ते तव दिव्यन्तरिक्षे श्रितो व्याप्तो धूमः केतुः प्रज्ञापकोऽभवत्। अग्न्यनुमापकत्वाद्धूमस्य। मात्रोः। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वम्। मन्द्रः। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। अत्र स्तुत्यर्थादस्मात् स्फायितञ्चीत्यादिना रक्। अन्तोदात्तः। कविः। क्रमेरिन् सर्वधातुभ्य इतीन् प्रत्ययः। बाहुलकत्वान्मकारस्य वत्वं रेफलोपश्च। व्यत्ययेनान्तोदात्तत्वम्। उदतिष्ठः। उत्पूर्वादूर्ध्वकर्मवाचिनस्तिष्ठतेरात्मनेपदाभावः। विवस्वतः।

विपूर्वाद्वसतेः सम्पदादिलक्षणो भावे क्विप्। तदस्यास्तीति मतुप्। मादुपधायाश्चेति वत्वं। मतुपोऽनुदात्तत्वाद्धातुस्वरः।

४। साधुया सर्वपुरुषार्थानाम् साधकोऽग्निर्नो यज्ञमस्मदीय याग प्रत्युप वेतु। आगच्छतु। नरो मनुष्या गृहे गृहेऽनुगृहमग्निं वि भरन्ते। विहरन्ति। विहरणम् कुर्वन्तीत्यर्थ.। हव्यवाहनो हव्यानां हविषा वोढाग्निर्दूतो देवानाम् दूतोऽभवत्। वृणाना: सम्भजमाना: सन्तः कविक्रतु क्रान्तयज्ञमग्निं वृणते। सम्भजन्ते। साधुया। सुपा सुलुगित्यादिना विभक्तेर्यादेशः।

५। हे अग्ने तुभ्यं तुभ्य त्वदर्थं मधुमत्तममत्यन्त मधुरमिदं वचः क्रियते। हृदे हृदि शं सुख कुर्वतीयं मनीषा स्तुतिस्तुभ्यमस्तु। गिरः स्तुतिरूपा वाचस्त्वामा पृणन्ति। पूरयन्ति शवसा वलेन वर्धयन्ति च। कथमिव। मह्नीर्महत्योऽवनीरवन्यो नद्यः सिन्धुमिव समुद्रमिव।

६। हे अग्नेऽङ्गिरस ऋषयो गुहा गुहाया हितं निहितं निगूढ़ वने वने वृक्षे वृक्षे शिश्रियाणमाश्रितं त्वामन्वविन्दन्। अलभन्त। मह्नमहता सहः सहसा वलेन युक्तः स त्वम् मथ्यमानो जायसे। हे अङ्गिरोऽङ्गिरसा प्रकृतिभूत त्वा सहसः पुत्रमाहु। शिश्रियाण। श्रिञ् सेवायाम्। लिटः कानच्। शपः श्लु.। श्लाविति द्विर्वचनम्। इयङादेश'। चित्त्वादन्तोदात्तः।

# PARJANYA V. 83



अच्छा वदेति दशर्चमेकादशं सूक्तं भौमस्याचेरार्षम्। अत्रेयमनुक्रमणिका। अच्छ दशात्रिः। पार्जन्यमुपाद्यास्तिस्रो जगत्यः। उपान्त्यानुष्टुबिति। यत्पर्जन्येत्येषा नवम्यनुष्टुप् वि वृक्षानित्याद्यास्तिस्रो जगत्यः। शिष्टाः षट् त्रिष्टुभः। पर्ज्जन्यो देवता। अनेन सूक्तेन प्रत्यृच वा दिश उपस्थेयाः। सूत्रितं च। संस्थितायां सर्वा दिश उपतिष्ठेताच्छा वद तवसं गीर्भिराभिरिति चतसृभिः प्रत्यृचं सूक्तेन वेति।

१। हे स्तोतस्तवसं बलवन्तं पर्जन्यमच्छाभिप्राप्य वद प्रार्थय। पर्जन्यशब्दो यास्केन बहुधा निरुक्तः। पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानामिति आभिर्गीर्भिः स्तुतिवाग्भिः स्तुहि नमसा अन्नेन हविर्लक्षणेन आ विवास सर्वतः

परिचर। य. पर्जन्यो वृषभः अपां वर्षिता जीरदानुः क्षिप्र-दानः कनिक्रदत् गर्जनशब्दं कुर्वन्नोषधीषु गर्भङ्गर्भस्थानीय रेतः उदकं दधाति स्थापयति तं स्तुहि।

२। अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः। तदेवात्र लिख्यते। पर्जन्यो विहन्ति वृक्षान्विहन्ति च रक्षांसि सर्वाणि चास्मा-द्भूतानि बिभ्यति महावधात्। महान् ह्यस्य वधः। अप्यन-पराधो भीतः पलायते। वर्षकर्मवतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः पापकृत इति।

३। रथीव रथस्वामीव। स यथा कशया अश्वान-भिक्षिपन् दूतान् भटानाविष्करोति तद्वदसौ पर्जन्योऽपि कशयाश्वानभिक्षिपन्नभिप्रेरयन् वर्ष्यान् वर्षकान् दूतान् दूत-वद्वृष्टिप्रेरकान्मेघान् मरुतो वा आविः कृणुते प्रकटयति। अहेति पूरणः। एवं सति सिंहस्य। सहतेर्हिंसतेर्वा शब्दकर्मणः सिंहशब्दः। अवर्षणेनाभिभवितुः शब्दयितुर्वा मेघस्य स्तनथा गर्जनशब्दा दूरात् उत् ईरते उद्गच्छन्ति। कदा। यत् यदा पर्जन्यो नभोऽन्तरिक्षं वर्ष्यं वर्षोपेतं कृणुते करोति तदा।

४। प्रवाता इति चतुर्थी पर्जन्यस्य चरोर्याज्या। सूत्रितं च। प्रवाता वान्ति पतयन्ति विद्युत इत्यग्न्याधेय-प्रभृतीति।

प्रवान्ति वाता वृष्ट्यर्थं पतयन्ति गच्छन्ति समन्तात्सं-चरन्ति विद्युतः ओषधीः ओषधयः उत् जिहते उद्गच्छन्ति प्रवर्धन्ते स्वरन्तरिक्षं पिन्वते क्षरति। इरा भूमिर्विश्वस्मै सर्वस्मै भुवनाय सर्वजगद्धिताय जायते समर्था भवति। कदैवमिति। यत् यदा पर्जन्यो देवः पृथिवीं रेतसा उद-केन अवति रक्षति अभिगच्छति वा तदैवं भवति।

५। यस्य पर्जन्यस्य व्रते कर्म्मणि पृथिवी नन्नमीति सर्वेषामधो भवति। यस्य व्रते शफवत् पादोपेतं गवादिकं जर्भुरीति भ्रियते पूर्यते गच्छतीति वा। यस्य व्रते कर्म्मणि ओषधीरोषध्यो विश्वरूपा नानारूपा भवन्ति हे पर्जन्य स महांस्त्वं नोऽस्मभ्यं महि शर्म महत् सुखं यच्छ प्रयच्छ।

६। हे मरुतः यूयं दिवोऽन्तरिक्षसकाशात् नोऽस्मदर्थं वृष्टिं ररीध्व दत्त। वृष्णः वर्षकस्य अश्वस्य व्यापकस्य मेघस्य संबन्धिन्यो धाराः उदकधाराः प्र पिन्वत प्रक्षरत। हे पर्जन्य त्वमेतेन स्तनयित्नुना गर्जता मेघेन सह अर्वाङ् अस्मद-भिमुखमा इहि आगच्छ। किं कुर्व्वन्। अपः अम्भांसि निषिञ्चन् स देवः असुर उदकाना निरसितापि सन् नोऽस्माकं पिता पालकश्च।

७। अभि भूम्यभिमुखं क्रन्द शब्दय। तदेव पुनरुच्यते दार्ढ्याय। स्तनय गर्ज्ज गर्भं गर्भस्थानीयमुदकमोषधीषु आ

धा: आधेहि । तदर्थमुदन्वता उदकवता रथेन परि दीय परितो गच्छ । इति इतिवदुदकधारक मेघं विषितं विशेषेण सितं बद्धं न्यञ्चं न्यक् अधोमुख सु सुष्टु कर्ष आकर्ष वृष्ट्यर्थम् । यद्वा । विषित विमुक्तबन्धनमेव कर्ष । एवं कृते उद्वत ऊर्ध्ववन्त उन्नतप्रदेशा निपादा. न्यग्भूतपादा: निकृष्टपादा वा निम्नोन्नतप्रदेशा: समा एकरूपा भवन्तु । उदकपूर्णा भवन्त्वित्यर्थ ।

४ । हे पर्जन्य त्व महान्तं प्रवृद्धं कोशं कोशस्थानीयं मेघमुत् अच उद्गच्छ उद्गमय वा । तथा कृत्वा नि षिञ्च नीचै: क्षारय । कुल्या नद्यो विषिता विसृता: सत्य: स्यन्दन्तां प्रवहन्तु पुरस्तात् पूर्वाभिमुखम् । प्रायेण नद्य: प्राच्य: स्यन्दन्ते । घृतेन उदकेन द्यावापृथिवी दिवं च पृथिवीं च वि उन्धि क्लेदयात्यधिकम् । अघ्न्याभ्यो गोभ्य: सुप्रपाणं सुष्टु प्रकर्षेण पातव्यमुदकं भवतु ।

९ । हे पर्जन्य यत् यदा त्वं कनिक्रदत् अत्यर्थं शब्दयन् स्तनयन् दुष्कृत: पापकृतो मेघान् हंसि विदारयसि तदानी- मिदं विश्व जगत् प्रति मोदते । विश्वं विशिष्यते । यत् किं च पृथिव्यामधि भूम्यामधिष्ठित यच्चराचरात्मकं तदिदं विश्वं मोदते हृष्यति वृष्टे: सर्वजगत्प्रीतिकारणत्वं प्रसिद्धम् ।

१०। इयमतिवृष्टिविमोचनी। हे पर्जन्य त्वमवर्षीः वृष्टवानसि वर्षमुत् उ षू गृभाय। उत्कृष्टं सु सुष्ठु गृभाय गृहाण परिहरेत्यर्थः। धन्वानि निरुदकप्रदेशान् अकः जलवतः कृतवानसि। किमर्थम्। अत्येतवा उ अतिक्रम्य गन्तुम्। ओषधीरजीजनः उदपादयः। किमर्थम्। भोजनाय धनाय भोगाय वा। कमित्ययं शिशिरं जीवनाय कमितिवत्पादपूरणः। उत अपि च प्रजाभ्यः सकाशात् मनीषां स्तुतिमविदः प्राप्तवानसि।

—※—

# PUṢAN VI. 54.



सं पूषन्निति दशर्चं पञ्चमं सूक्तं भरद्वाजस्यार्षं पौष्णं गायत्रम्। सं पूषन्नित्यनुक्रान्तम्। नष्टधनमन्विच्छता पुरुषेणैतज्जप्यम्। सूचितं च। सं पूषन्विदुषेति नष्टमधि-जिगमिषन्मूल्हो वेति।

१। हे पूषन् पोषक देव विदुषा जानता तेन जनेन सन्नय अस्मान् सङ्गमय। यो विद्वान् अञ्जसा ऋजुमार्गेण अनुशासति अनुशास्ति नष्टद्रव्यप्राप्त्युपायमुपदिशति। यश्चैव एवमिदं नष्टं भवदीयं धनमिति ब्रवत् ब्रवीति नष्टं धनं दर्शयतीत्यर्थः। तेन विदुषेत्यन्वयः।

२। पूष्णा अनुगृहीता वयं सङ्गमेमहि तेन जनेन सङ्गच्छेमहि यो जनो गृहान् येषु गृहेषु अस्मदीया नष्टाः पशवस्तिष्ठन्ति तान् गृहानभिशासति अभिशास्ति आभिमुख्येन बोधयति। यश्चेमे त्वदीया नष्टा, पशव एव एवं तिष्ठन्तीति च ब्रवत् ब्रूयात्।

३। पूषाः पोषकस्य देवस्य चक्रमायुधं न रिष्यति न विनश्यति। अस्य चक्रस्य कोशश्च न अवपद्यते न हीयते। अस्य पवि. धारा च नो नैव व्यथते कुण्ठीभवति। तेन चक्रेण चोरान् हत्वास्मदीय धनं प्रकाशयेति भाव:।

४। यो यजमान' अस्मै पूष्णे हविषा चरुपुरोडाशादिना अविधत् परिचरति तं यजमानं पूषा न अपि मृष्यते। अपिशब्द ईषदर्थे। ईषदपि न हिनस्ति। स च प्रथमो मुख्य: सन् वसु धनं विन्दते लभते।

५। पूषा पोषको देव: नोऽस्मदीया गा: अन्वेतु रक्षणार्थमनुगच्छतु। स च पूषा अर्वत: अश्वान्रक्षतु चोरेभ्य:। तथा वाजमन्नं च नोऽस्मभ्यं पूषा सनोतु प्रयच्छतु।

६। हे पूषन् सुन्वत: सोमाभिषव कुर्वतो यजमानस्य गा: पशून् अनु प्र इहि रक्षणार्थमनुगच्छ। उत अपि च स्तुवतां त्वद्विषयं स्तोत्रं कुर्वतामस्माकं गाश्चानुगच्छ।

७। हे पूषन् अस्मदीयं गोधनं माकि: नेशत् मा नश्यतु। माकिर्माकीमित्येतौ प्रतिषेधमात्रे वर्त्तेते। माकीं रिषत् मा व्याघ्रादिभिर्हिंस्यताम् माकीं मा च केवटे कूपे सं शारि सशीर्णं भूत् कूपपातेनापि हिंसितं मा भवतु। अथ एवं सति अरिष्टाभिरहिंसिताभिर्गोभि: सह आगहि सायंकाले आगच्छ।

# ĀPAS-VII 49

समुद्रज्येष्ठा इति चतुर्ऋचं षोड़शं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभमब्देवताकम्। तथा चानुक्रान्तं समुद्रज्येष्ठा आपमिति। गतो विनियोगः।

१। समुद्रज्येष्ठाः समुद्रोऽर्णवो ज्येष्ठः प्रशस्यतमो यासामपां ताः। सलिलस्य। अन्तरिक्षनामैतत्। अन्तरिक्षस्य मध्यात् माध्यमिकात् स्थानात् यन्ति गच्छन्ति। कीदृश्यः। पुनाना विश्व शोधयन्त्यः अनिविशमानाः सर्वदा गच्छन्त्यः। वज्री वज्रभृत् वृषभः कामाना वर्षितेन्द्रो याः निरुद्धा अपः रराद लिखति देवार्देव्यस्ता आप इहास्मिन् प्रदेशे स्थितं मामवन्तु रक्षन्तु अभिगच्छन्तु वा।

२। या आप दिव्याः अन्तरिक्षभवाः सन्ति। उत वा अपि च या आपः नद्यादिगताः सत्यः स्रवन्ति गच्छन्ति याश्च खनित्रिमाः खननेन निर्वृत्ताः। उत वा अपि च याः स्वयंजाः स्वयमेव प्रादुर्भवन्त्यः समुद्रार्थाः समुद्र एवार्थो गन्तव्यो यासां ताः समुद्रार्थाः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यश्च भवन्ति। ता आपो मामवन्त्विति।

३। वरुणो यासामपां राजा स्वामी मध्ये मध्यमलोके याति गच्छति। किं कुर्वन्। जनानां प्रजानां सत्यानृते सत्यं चानृतं च अवपश्यन् जानन्नित्यर्थः। या आपः मधुश्चुतः रसं चरन्त्यः शुचयो दीप्तियुक्ताः पावकाः शोधयित्र्यः। ता आपो देव्यो मां रक्षन्त्विति।

४। अपां राजा वरुणो यास्वप्सु वर्त्तते। सोमः यास्वप्सु वर्त्तते। यास्वप्सु स्थिता विश्वे सर्वे देवा ऊर्जमन्नं मदन्ति। वैश्वानरः अग्निर्यासु प्रविष्टः ता आपो देव्य इह स्थितं मामवन्तु।

—o—

# MITRA-VARUNA VII. 61.

उद्वां चक्षुरिति सप्तर्चं षष्ठं सूक्तं वशिष्ठस्यार्षं त्रैष्टुभं मैत्रावरुणम्। उद्वां सप्तेत्यनुक्रमणिका। विनियोगो लैङ्गिकः।

१। हे वरुणा मित्रावरुणौ देवयोर्द्योतमानयोर्वा युवयोश्चक्षुः प्रकाशकं तेजः सुप्रतीकम् शोभनरूपमेवंरूपः सूर्य्यस्ततन्वास्तेजो विस्तारयन्नुदेति। उद्गच्छति। अथोदितो यो देवो विश्वा सर्वाणि भुवनानि भूतजातान्यभिचष्टे अभिपश्यति स देवो मर्त्येषु प्रवृत्त मन्युं स्तोत्रं कर्म वा चिकेत। आजानाति।

२। हे मित्रावरुणौ वा युवयोर्मन्मानि मननीयानि स्तोत्राणि स प्रसिद्धो विप्रो मेधाव्यृतावा यज्ञवान् दीर्घश्रुश्चिरकालं श्रोता एवमुक्तलक्षणो वशिष्ठ इयर्त्ति। प्रेरयति। यस्यर्षेर्ब्रह्माणि परिवृढ़ानि स्तोत्राणि हे सुक्रतू शोभनकर्माणौ अवाथः रक्षथः। यत्कर्म्म शरदो बहून् सवत्सराना पृणैथे आपूरयेथे स उदियर्त्ति।

३। हे मित्रावरुणा मित्रावरुणौ युवामुरोर्विस्तीर्णाया. पृथिव्या अपि प्र। प्ररिरिचाथे। अस्येदेव प्र रिरिचे। ऋ० १।६१।९। इत्यादिषु प्रशब्दस्य रिरिच इति योज्यं। तथर्ष्वाद्गुणैर्महता वृहतः स्वरूपतोऽतिमहतो दिवो द्युलोकादपि प्र रिरिचाथे। हे सुदानू शोभनदानौ। किं चौषधीषु विक्षु प्रजासु निमित्तभूतासु प्रजासु चेति वा स्पशो रूप दधाथे। धारयेथे। किं कुर्वन्तौ। ऋधग्यत ऋधक्सत्येन यतो विवेकात् सत्येन गच्छतो जनाननिमिषमव्यवधानेन सर्वदा रक्षमाणा पालयन्तौ।

४। हे ऋषे मित्रस्य वरुणस्य च धाम तेजःस्थानं शस। स्तुहि। ययोर्देवयोः शुष्मो वलं रोदसी द्यावापृथिव्यौ सह वर्त्तमाने महिना स्वमहत्त्वेन बद्बधे बध्नाति पृथक्स्थापयति इयं पृथिवीयं द्यौरिति पृथक्करोति। द्यावा पृथिवी सहास्तामिति श्रुतेः। अयज्वनामननुष्ठातॄणा मासाः कालावयवाः अवीरा अपुत्रा एवायन्। यन्तु। गच्छन्तु। तद्विपरीतो यज्ञमन्मा यज्ञार्थं मतिमान् यज्वा वृजनं बलं प्र तिराते। प्रवर्धयतु। प्रपूर्व्वस्तिरतिर्वर्धनार्थः।

५। हे अमूरामूढौ हे विश्वा व्याप्तौ हे वृषणौ वर्षितारौ वां युवाभ्यामिमा इमानि स्तुतिवचांसि क्रियन्ते। यासु स्तुतिषु चित्रमाश्चर्यं न दद्दशे न दृश्यते न यक्षं न पूजा

दृश्यते। युवाभ्याम् महिम्नोऽपि महत्त्वात् प्रयत्नेन क्रियमाणमपि स्तोत्रं न चमत्करोतीत्यर्थः। जनानामनृता स्तुत्यविषयाणि स्तोत्राणि द्रुहो द्रोग्धारः सचन्ते। सेवन्ते। न महान्तः। वां युवाभ्याम् क्रियमाणानि निण्यान्यन्तर्हितानि रहस्यान्यपि स्तोत्राण्यचित्तेऽज्ञानाय नाभूवन्। न भवन्ति।

६। हे मित्रावरुणौ वां युवयोर्यज्ञं नमोभिर्नमस्कारैः स्तुतिभिः समु महय। सम्पूजयाम्यहम्। तदर्थं हे मित्रावरुणा मित्रावरुणौ वा सबाधो बाधायुक्तोऽहं हुवे। आह्वयामि बाधापरिहाराय। वां युवामृचसे सेवितुं नवानि नूतनानि स्तुत्यानि वा मन्मानि स्तोत्राणि प्र भवन्त्वित्यध्याहारः। कृतानि मया समूहीकृतानीमानीदानीं क्रियमाणानि ब्रह्म परिवृढानि स्तोत्राणि युवा जुजुषन्। प्रीणयन्तु।

७। इयं देवेति सप्तमी गता।

———

# SURYA VII, 63.

उद्वेतीति षड्टचमष्टमं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं आद्यास्ततस्रः पञ्चम्याः पूर्व्वार्धश्च सूर्य्यदेवत्या अवशिष्टास्त्रयोऽर्धर्चा मित्रावरुणदेवत्याः। तथा चानुक्रान्तम्। उद्वेतीति चार्धपञ्चमा इति। विनियोगो लैङ्गिकः।

१। उद्वेति उद्गच्छत्ययं सूर्य्यः सुभगः शोभनभाग्यः सुष्ठु भजनीयो वा विश्वचचाः सर्व्वस्य द्रष्टा मानुषाणाम् सर्वेषां मनुष्याणाम् साधारणः। साधारणत्वप्रतिपादक-श्रुतिः पूर्व्वमुदाहृता। मित्रस्य वरुणस्य च चक्षुः प्रकाशको देवो द्योतमानः। यो देवश्चर्मेव चर्माणीव तमांसि समवि-व्यक् सह विचति संवेष्टयति स महानुभावो देव उद्वेति।

२। अयं सूर्य्यस्य सूर्य्यः। विभक्तिव्यत्यय। उद्वेति। उद्गच्छति। कीदृशोऽयम। जनानाम् सर्वेषा प्रसविता सर्वेषु कर्मस्वनुज्ञाता महान् पूज्यः केतुः सर्व्वस्य प्रज्ञापको-ऽर्णव उदकप्रदः। किं कुर्व्वन्नुदेतीति उच्यते। समान सर्वेषामेकरूपमेकमेव चक्रं रथाङ्गं चरणशीलं रथं वा

पर्य्याविवृत्सन् पर्य्यावर्त्तयितुमिच्छन्। यद्रथचक्रं धूर्षु रथस्य युक्त एतश एतशवर्णो हरितवर्णोऽश्वो वहति। एको अश्वो वहति सप्तनामा। ऋ० १।१६४।२। इत्युक्तम्।

३। अयं सूर्य्यो विभ्राजमानो विशेषेण दीप्यमान उषसामुपस्थादुपस्थे मध्ये रेभैः स्तोतृभिरनुमद्यमानः सन्नुदेति। किञ्चैष देवो द्योतमान. सविता मे मह्यं चच्छन्द। उपच्छन्दयति कामान्। एष इत्युक्त क इति। यो देवः समानम् सर्वेषाम् प्राणिनामेकरूपं धाम स्वीय तेजःस्थानं न प्रमिनाति न हिनस्ति न सङ्कोचयति स देव उदेतीति।

४। अयं सूर्य्यो रुक्मो रोचमान उरुचक्षाः प्रभूततेजाश्च सन्दिवोऽन्तरिक्षमुदेति। यद्वा दिवोऽन्तरिक्षस्य रुक्म आभरणस्थानीय। कीदृशोऽयं। दूरेअर्थो दूरेगन्ता। अर्थोऽर्त्तेः। दूरे प्रार्थ्यमानो वा। तरणिस्तारको भ्राजमानो दीप्यमानः सन्नुदेति। नूनं निश्चयम् जनाः सर्वे प्राणिनः सूर्य्येण प्रेरकेण देवेन प्रसूता अनुज्ञाताः प्रेरिताः सन्तोऽर्थानि गन्तव्यान्यनुष्ठेयान्यपासि कर्माणि कृणवन्। कुर्व्वन्ति।

५। यत्र यस्मिन्नन्तरिक्षेऽमृता अमरणधर्माणः पूर्व्वे देवा अस्मै सूर्य्याय गातुं मार्गं चक्रुः अकुर्व्वन् तत्पाथोऽन्तरिक्षमन्वेति। अनुगच्छति। क इव। दीयन् गच्छन्

श्येनो न शसनीयगमनो गृध्र इव। अयमर्धर्चः सौर्य्ये इत्युक्तं। हे मित्रावरुणा मित्रावरुणौ वां युवां सूरे सूर्य्ये उदिते सति प्रातःसवने नमोभिर्नमस्कारैः स्तुतिभि स्तुतापि च हव्यैर्हविर्भिश्च प्रति विधेम। परिचरेम।

६। नू मित्र इति षष्ठी गता।

—o—

# Asvin vii. 71.



पञ्चमेऽनुवाके एकोनविंशति सूक्तानि। तत्राप स्वसुरिति षडृचं प्रथमं सूक्तं त्रैष्टुभमाश्विनम्। अनुक्रम्यते च। अप स्वसुः षडिति। गतो विनियोगः।

१। स्वसुः स्वस्थानीयायाः उषसः सकाशान्नग्नक्ता रात्रिरप जिहीते। अपगच्छति। तस्या अवकाशं दत्वा स्वयमपगतेत्यर्थः। स्वसा स्वस्रे ज्यायस्यै योनिमारैक्। ऋ० १।१२४।८। इत्युक्तम्। कृष्णीः कृष्णवर्णा रात्रिररुषाया-रोचमानायाऽह्ने सूर्य्याय वा पन्थां पन्थानं मार्गं रिणक्ति। रेचयति। यस्मादेवं तस्माद्युवयोरागमनसमयत्वात् हे अश्वामघाश्वधनौ हे गोमघा गोधनौ। उभयोः प्रदातारावित्यर्थः। ईदृशौ वां युवा हुवेम। स्तुमः। आह्वयामः। दिवा नक्तं सर्वदा शरुं हिंसकमस्मदस्मत्तो युयोतम्। पृथक् कुरुतम्।

२। हे अश्विनौ युवामुपायातम्। उपागच्छतमस्मदाह्वानं प्रति। किमर्थम्। दाशुषे हविषा दात्रे यज-

मानाय तदर्थं रथेन वामं वननीयं धनं वहन्ता वहन्तौ । अस्मदस्मत्तो युयुतम् । पृथक्कुरुतम् । किम् । अनिराम् । दुरान्नम् । तदन्नदारिद्र्यमित्यर्थः । अमीवां रोगं च । हे माध्वी मधुमन्तौ युवा नोऽस्मान् दिवा नक्तं सर्वदा चासीथाम् । रक्षतम् ।

३ । अवमस्यामासन्नायाम् व्युष्टौ व्युच्छन उषसि वा युवयो रथं सुम्नायवः सुखेन योजयन्तोऽश्वा वृषणो वर्षका युवामा वर्त्तयन्तु । स्यूमगभस्तिं सुखरश्मिम् स्यूतरश्मिम् वसुमन्तं प्रदेयधनयुक्तं रथं हे अश्विनाश्विनावृतयुग्भिरुदकयुक्तैरश्वैरुदकप्रदैरश्वैरा वहेथाम् ।

४ । हे नृपती नृणां यजमानाना पालकावश्विनौ वा युवयोर्यो रथो वोढ़ा युवयोर्वाहकोऽस्ति सर्वदा सन्निहितो वर्त्तते । कीदृशोऽसौ । त्रिबन्धुरः । सारथ्यधिष्ठानस्थानत्रयोपेतो वसुमान् धनवानुस्रयामोस्रं दिवसं प्रति गन्ता । एनेतेन रथेन हे नासत्याश्विनौ नोऽस्मानुपा यातम् । यद्रथो यस्य रथो वां विश्वप्स्न्यो व्याप्तरूपोऽभिजिगाति अभिगच्छति । अथवाह । यद्यस्माद्विश्वप्स्न्यो वसिष्ठो वां जिगाति स्तौति अत उपा यातम् ।

५ । हे अश्विना युवं युवां च्यवानम् जरसो जीर्णाद्रूपादमुमुक्तम् । अमुंचतम् । युवं च्यवानमश्विना जरन्तं

पुनर्युवानम् । ऋ० १।११७।१३। इति ह्यन्यत्र। तथा पेदव एतन्नामकाय राज्ञ आशुं शीघ्रगामिनमश्वं निरूहथुः। न्यवहतम्। युद्धे। युवं श्वेतम् पेदवे। ऋ० १।११८।९। इति निगमः। तथात्रिं महर्षिमंहस ऋबीसादग्नेः सकाशात्तमसश्च गुहान्तःस्थिताच्च सकाशान्निष्पर्त्तम्। न्यपारयतम्। युवमृबीसमुत तप्तमत्रय ओमन्वन्त चक्रथुः। ऋ० १०।३९।९। इति निगमः। तथा जाहुषं शिथिरे शिथिले भ्रष्टे स्वराष्ट्रेऽन्तर्मध्ये पुनर्निधातम्। न्यधातम्। परिविष्टं जाहुषं विश्वतः सीं। ऋ० १।११६।२०। इति ह्युक्तम्।

६। इयं मनीषेति षष्ठी गता।

—०—

# Varuna vii. 86.



धीरा त्वस्येत्यष्टर्चं षोडशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वरुणदेवत्यम्। तथा चानुक्रान्तम्। धीराष्टौ वारुणं हेति। गतो विनियोगः।

१। अस्य वरुणस्य जनूंषि जन्मानि महिम्ना नु चिद्धीरा धीराणि धैर्यवन्ति भवन्ति। यः वरुणः उर्वी विस्तीर्णे रोदसी चित् द्यावापृथिव्यावपि वि तस्तम्भ विविधं स्तब्धे स्वकीये स्थाने स्थिते अकरोत्। यश्च बृहन्तं महान्तं नाकमादित्यं नक्षत्रं च ऋष्वं दर्शनीयं द्विता द्वैधं प्र नुनुदे प्रेरयति स्म। अहनि सूर्यं दर्शनीयं प्रेरयति रात्रौ नक्षत्रं तथेति द्विप्रकारः। भूम भूमिं च यः पप्रथत् अप्रथयत् विस्तारितवान्। तस्यास्य वरुणस्येत्यन्वयः।

२। वरुणं शीघ्रं दिदृक्षमाण ऋषिरनया वितर्कयति। उतेति विचिकित्सायाम्। उत किं स्वया तन्वा स्वीयेनात्मीयेन शरीरेण संवदे सहवदनं करोमि। आहो स्वित् तत्तेन वरुणेन सह सं वदे कदा नु कदा खलु वरुणे देवेऽन्तर्भुवानि

अन्तर्भूतो भवानि। वरुणस्य चित्ते सलग्नो भवानीत्यर्थः। अपि च मे मदीयं हव्य स्तोत्रं हविर्वा अहृणानः अक्रुध्यन् वरुण. किं केन हेतुना जुषेत सेवेत। सुमना शोभनमनस्कः सन्नह कदा कस्मिन् काले मृळीकं सुखयितारं वरुणमभि ख्यम् अभिपश्येयम्।

३। हे वरुण तदेनः पापं पृच्छे त्वा पृच्छामि। दिदृक्षु। छान्दसः सुलोपः। द्रष्टुमिच्छन्नहं येन पापेन हेतुना त्वदीयैः पाशैर्बद्धोऽस्मि। पृष्टः सन् तत्पापं कथय। अह विपृच्छं विविधं प्रष्टुं चिकितुषः विदुषो जनानुपो एमि उपागाम्। ते कवयश्चित् क्रान्तदर्शिनो जनाश्च मे मह्य समानमित् समानमेव आहुः अकथयन्। यदाहु-स्तदाह। हे स्तोतः तुभ्यमयं ह अयमेव वरुणो हृणीते क्रुध्यतीति। अत' क्रोधं परित्यज्य अस्मान् पाशेभ्यो मोचय।

४। हे वरुण ज्येष्ठमधिकं किमाग आस कोऽपराधो मया कृतो बभूव यत् येन आगसा सखायं मित्रभूत सन्तं स्तोतारं जिघांससि हन्तुमिच्छसि। हे दूळभ दुर्दभ अन्यै-र्बाधितुमशक्य स्वधावः तेजस्विन् हे वरुण तदागो मे मह्यं प्र वोचः प्रब्रूहि। एव सति तस्य प्रायश्चित्तं कृत्वा अनेना अपापः सन्नहं तुरः त्वरमाणः शीघ्रो नमसा नमस्कारेण हविषा वा त्वामवेयाम् उपगच्छेयम्।

५ । हे वरुण पित्र्या पितृतः प्राप्तानि नोऽस्मदीयानि द्रुग्धानि द्रोहान् बन्धनहेतुभूतान् अव सृज विमुञ्च अस्मत्तो विश्लेषय । वयं च या यानि द्रोहजातानि तनूभिः शरीरैश्चकृम कृतवन्तः स्म तानि च अव सृज । हे राजन् राजमान वरुण पशुतृप न तायुं स्तैन्यप्रायश्चित्तं कृत्वावसाने घासादिभिः पशूना तर्पयितारं स्तेनमिव दाम्नो रज्जोर्वत्सं न वत्समिव च वसिष्ठं मा बन्धकात् पापादव सृज विमुञ्च ।

६ । हे वरुण स स्वो दक्षः पुरुषस्य स्वभूतं तद्बलं पापप्रवृत्तौ कारणं न भवति । किं तर्हि । ध्रुतिः स्थिरा उत्पत्तिसमय एव निर्मिता दैवगतिः कारणम् । ध्रु गतिस्थैर्ययोरिति धातु. । सा च ध्रुतिः वक्ष्यमाणरूपा । सुरा प्रमादकारिणी । मन्युः क्रोधश्च गुर्वादिविषयः सन् अनर्थहेतुः । विभीदकः द्यूतसाधनोऽक्षः । स च द्यूतेषु पुरुषं प्रेरयन्ननर्थहेतुर्भवति । अचित्तिः अज्ञानमविवेककारणम् । अत ईदृशी दैवक्लृप्तिरेव पुरुषस्य पापप्रवृत्तौ कारणम् । अपि च कनीयसः अल्पस्य हीनस्य पुरुषस्य पापप्रवृत्तौ उपारे उपागते समीपे नियन्तृत्वेन स्थितो ज्यायानधिकः ईश्वरोऽस्ति । स एव तं पापे प्रवर्त्तयति । तथा चाम्नातम् । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषत इति । एवं च सति स्वप्नश्चन स्वप्नोऽपि अनृतस्य पापस्य प्रयोता प्रकर्षेण मिश्रयिता भवति । इदिति

पूरक। स्वप्ने कृतैरपि कर्मभिर्बहूनि पापानि जायन्ते किमु वक्तव्यं जाग्रति कृतैः कर्मभिः पापान्युत्पद्यन्त इति। अतो ममापराधो दैवागत इति हे वरुण त्वया क्षन्तव्य इति भावः।

७। मीढुषे सेक्त्रे कामाना वर्षित्रे भूर्णये जगतो भर्त्रे देवाय दानादिगुणयुक्ताय वरुणाय अनागाः तत्प्रसादा-दपापः सन्नहम् अरम् अलं पर्य्याप्तं कराणि परिचरणं करवाणि। दासो न। यथा भृत्यः स्वामिने सम्यक् परि-चरति तद्वत्। अर्य्यः स्वामी स च देव अचितः अज्ञानस्मान चेतयत् चेतयतु प्रज्ञापयतु। गृत्स स्तोतारं च कवितरः प्राज्ञ-तरो देवः राये धनाय धनप्राप्त्यर्थं जुनाति जुनातु प्रेरयतु।

८। एकादशिनि वारुणे पशौ अयमिति पुरोडाशस्या-नुवाक्या। सूत्रित च। अयं सु तुभ्य वरुण स्वधाव एवा वन्दस्व वरुण बृहन्तमिति।

हे स्वधाव अन्नवन्वरुण तुभ्य त्वदर्थं क्रियमाणोऽयम् एतत्सूक्तात्मकं स्तोमः स्तोत्र हृदि त्वदीये हृदये सु सुष्ठु उपश्रितः उपगत समवेतोऽस्तु। चिदिति पूरकः। अप्राप्तस्य प्रापणं योगः प्राप्तस्य रक्षणं क्षेमः। नोऽस्मदीये क्षेमे रक्षणे शमुपद्रवाणां शमनमस्तु। योगे च नोऽस्मदीये प्रापणे शमु शमनमेवास्तु उपद्रवाणाम्। हे वरुणादयो देवाः नोऽस्मान् सर्वदा स्वस्तिभिरविनाशैः पात रक्षत।

---

# Maṇḍukās vii. 103.

संवत्सरमिति दशर्चं चतुर्दशं सूक्तं वशिष्ठस्यार्षं त्रैष्टुभम्। आद्या अनुष्टुप्। मण्डूका देवता। तथा चानुक्रान्तम्। संवत्सरम् दश पर्ज्जन्यस्तुतिः संहृष्टान्मण्डूकांस्तुष्टावाद्यानुष्टुबिति। वृष्टिकामेनैतत्सूक्तं जप्यम्।

१। अत्र निरुक्तं। वसिष्ठो वर्षकामः पर्ज्जन्यं तुष्टाव तं मण्डूका अन्वमोदन्त स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव। नि ९।६। इति। मण्डूका मज्जूका मज्जनान्मदतेर्वा मोदतिकर्मणो मदतेर्वा तृप्तिकर्मणो मण्डय तेरिति वैयाकरणा मण्ड एषामोक इति वा, मण्डो मदेर्वा मुदेर्वा। तेषामेषा भवति। निं ९।५। इति। व्रतचारिणो व्रतं संवत्सरसत्रात्मकं कर्म्माचरतो ब्राह्मणाः। लुप्तोपममेतत्। एवम्भूता ब्राह्मणा इव सवत्सरम् शरत्प्रभृत्या वर्षर्तोरिक संवत्सरम् शशयानाः शिश्याना वर्षणार्थं तपश्चरन्त इव विल एव सत एते मण्डूका पर्ज्जन्यजिन्विता

पर्जन्येन प्रीता यया वाचा पर्जन्यः प्रीतो भवति तादृशीं वाचं प्रावादिषुः । प्रवदन्ति ।

२ । दिव्या दिवि भवा आपो दृतिं न दृतिमिव शुष्कं नीरस सरसी । महत्सरः सरसी । गौरादिलक्षणो ङीष् । सरस्या । सुपा सुलुगिति सप्तम्या लुक् । ईदूतौ च सप्तम्यर्थे इति प्रगृह्यसंज्ञा । महति सरसि निर्जले घर्मकाले शयानं निवसतमेनं मण्डुकगणं यद्यदायन् अभिगच्छन्ति तदात्रा-स्मिन्वर्षणे पर्जन्ये वा सति वत्सिनीनां वत्सयुक्तानाम् गवां न मायुर्गवां शब्द इव मण्डूकानाम् वग्नुः शब्दः समेति । सङ्गच्छते । यथा वत्सैः सङ्गतासु गोषु महान् घोषो जायते तद्वद्वृष्टे पर्जन्ये महान् कलकलशब्दो जायत इत्यर्थः । अहेति पूरकः ।

३ । उशतः कामयमानांस्तृष्यावतस्तृष्णावत एना-न्मण्डूकान् प्रावृषि वर्षर्तावागतायामागते सति यद्यदाभ्य-वर्षीत् पर्जन्यो जलैरभिषिञ्चति । ईमिति पूरणः तदानी-मख्खलीकृत्य । अख्खल इति शब्दानुकरणम् । अख्खल-शब्द कृत्वा पुत्रः पितरम् न पितरमिवान्यो मण्डूको वदन्तं शब्दयतमन्यं मण्डूकमुपैति । प्राप्नोति ।

४ । एनोरेनयोर्द्वयोर्मण्डूकयोरन्यो मण्डूकोऽन्य मण्डूक-मनुगम्य गृभ्णाति । गृह्णाति । अपामुदकानाम् प्रसर्गे

प्रसर्जने वर्षणे सति यद्यदामंदिषाताम् हृष्टावभूताम् । यद्यदा चाभिवृष्टः पर्जन्येनाभिषिक्तः कनिष्क्रन् । स्कन्दतेर्यङ्लुगन्तस्य रूप । भृशं स्कन्दन्नुत्प्लव कुर्वन् पृश्निः पृश्निवर्णो मण्डूको हरितेन हरितवर्णेनान्येन मण्डूकेन वाचं सम्पृंक्ते संयोजयति उभावप्येकविध शब्द कुर्वाते । तदानीमन्योऽन्यमनु गृभ्णातीत्यन्वय' ।

५ । हे मण्डूकाः यद्यदेषा युष्माकं मध्येऽन्यो मण्डूकोऽन्यस्य मण्डूकस्य वाचं वदति अनुवदति अनुकरोति शिक्षमाणः शिक्ष्यमाणः शिष्यः शाक्तस्येव शक्तिमतः शिक्षकस्य वाचं यथानुवदति तद्वत् । यद्यदा च सुवाचः शोभनवाचो यूयम् सर्वेऽप्सु वृष्टेषूदकेष्वध्युपरि प्लवन्तो वदथन वदत शब्दं कुरुत तत्तदेषां युष्माक सर्व पर्व परुषच्छरीरं समृधेव समृद्धमेवाविकलावयवमेव भवति । इवशब्दोऽवधारणे । घर्मकाले शुष्कभावमापन्ना मण्डूकाः पुनर्वर्षणे सत्यविकलाङ्गाः प्रादुर्भवन्तीत्यर्थः ।

६ । एषां मण्डूकानाम् मध्य एको मण्डूको गोमायुर्गोर्मायुरिव मायुः शब्दो यस्य तादृशो भवति । एकोऽन्यो मण्डूकोऽजमायुरजस्य मायुरिव मायुर्यस्य तादृशो भवति । एकः पृश्निः पृश्निवर्णः । एकोऽपरो हरितो हरितवर्णः । एवं विरूपा नानारूपा अपि समानमेक मण्डूका इति नाम

विभ्रतो धारयन्त. पुरुत्रा बहुषु देशेषु वाचं वदन्तः शब्दं कुर्वन्त पिपिशुः । अवयवीभवन्ति । प्रादुर्भवन्ति । पिश अवयवे । पुरुशब्दाद्देवमनुष्येत्यादिना त्रा-प्रत्ययः ।

७ । रात्रिमतीत्य वर्त्तत इत्यतिरात्रः अतिरात्रे न सोमे । यथातिरात्राख्ये सोमयागे ब्राह्मणासो ब्राह्मणा रात्रौ स्तुतशस्त्राणि पर्य्यायेण शंसन्ति हे मण्डूकाः । द्वितीयो नशब्दः सम्प्रत्यर्थे । न सम्प्रति पूर्णं सरोऽभितः सर्व्वतो वदंतो रात्रौ शब्दं कुर्वाणा यूयं तदहस्तद्दिन परि ष्ठ । परितः सर्वतो भवथ । यदहः प्रावृषीण प्रावृषेण्यं प्रावृषि भव बभूव तस्मिन्नहनि सर्वतो वर्त्तमाना भवथेत्यर्थ ।

८ । सोमिनः सोमयुक्ताः परिवत्सरीण सांवत्सरिकं गवामयनिकं ब्रह्म स्तुतशस्त्रात्मकं कृण्वन्तः कुर्वन्तो ब्राह्मणासः । लुप्तोपममेतत् । ब्राह्मणा इव वाच शब्दमक्रत । अक्रषतेमे मण्डूका' । अपि च घर्मिणो घर्मेण प्रवर्गेण चरन्तोऽध्वर्यवोऽध्वरस्य नेतार ऋत्विज इव सिष्विदानाः स्विद्यद्‌गात्रा गुह्या घर्मकाले विलेऽभिगूढा' केचित् केचन मण्डूका न सम्प्रति वृष्टौ सत्यामाविर्भवन्ति । जायन्ते।

९ । 'नरो नेतार एते मण्डूका देवहितिं देवैः कृतम् विधानमस्यर्तोरयं धर्म्म इत्येवंरूप जुगुपुः । गोपायन्ति ।

काले काले रक्षति। अत एव द्वादशस्य द्वादशमासात्मकस्य संवत्सरस्यर्तुं तं त वसन्तादिकम् न प्र मिनन्ति। न हिंसन्ति। पर्जन्यस्तुतेरनुमोदनेन तत्तत्काले वृष्टिर्हितवो भवतोत्यर्थः। संवत्सरे सम्पूर्णे प्रावृषि वर्षतावागतायामागते सति घर्माः पूर्वं घर्मकाले वर्त्तमानास्तप्तास्तापेन पीडिताः सम्प्रति विसर्गं विसर्जनं विलान्मोचनमश्नुवते। प्राप्नुवन्ति।

१०। गोमायुर्गोरिव मायुः शब्दो यस्य तादृशो मण्डूको वसूनि धनानि नोऽस्मभ्यमदात्। ददातु। अजमायुश्चादात्। ददातु। हरितो हरितवर्णश्चादात्। ददातु। पृश्निः पृश्निवर्णश्चादात्। ददातु। तथा सहस्रसावे। सहस्रसंख्याका ओषधयः सूयंत उत्पद्यंत इति वर्षर्तुः सहस्रसाव। तस्मिन् सति सर्वे मण्डूका गवा शतान्यपरिमिता गा ददतोऽस्मभ्य प्रयच्छन्त आयुर्जीवन प्र तिरन्ते। प्रवर्धयन्तु।

—०—

# Visve-devās viii. 29.

बभ्रुरेक इति दशर्चं नवमं सूक्तम्। मरीचि-पुत्रः कश्यपो वैवस्वतो मनुर्वा ऋषिः। तथा चानुक्रम्यते। बभ्रुर्दश कश्यपो वा मारीचो द्वैपदमिति। दशापि द्विपदा विशत्यक्षरा विराजः। पूर्ववद्विश्वेदेवा देवता। तृतीये छन्दोमे वैश्व-देवसूक्तात् पूर्वमेव द्वैपदं सूक्तं शंसनीयम्। सूत्रते हि। बभ्रुरेक इति द्विपदासूक्तानि पुर-स्ताद्वैश्वदेवसूक्तानाम्। आ० ८।७। इति।

१। अत्र दशानामृचां किञ्चित् पदम् लिङ्गात्पृथग्-देवतम्। अत्र प्रथमायाम् बभ्रुरित्यनेन सोमोऽभिधीयते। सौम्यं बभ्रुमा लभेत। तैः स २।१।३।३ इत्यादिषु दृष्टत्वात्। बभ्रुर्बभ्रुवर्णः शवलतादिषु परिपक्वः। यद्वा डुभृञ् धारण-पोषणयो'। कुर्भ्रश्च। उ० १।२३। इति कुप्रत्ययः। सर्वस्य सुधामयैः किरणैस्तावदुन्नते चन्द्रमसि दुःखोप-शमनानि पुष्टानि खलु। तादृशो विषुणो विष्वगञ्चनः

सूनरः सुष्ठु रात्रीणां नेता। रात्रयश्चन्द्रनेत्रिकाः खलु। एतादृशो युवा प्रतिदिवसमाविर्भूतत्वात्तरुण एको देवः सोमो हिरण्ययं हिरण्मयमञ्जि। अभिव्यज्यते प्रकाश्यतेऽनेनेत्यंज्याभरणम्। अभिव्यक्तिसाधनम् कुण्डलमुकुटादिकम् स्वशरीरमङ्क्ते। अभिव्यञ्जयति।

२। अत्र योनिमिति लिङ्गादग्निरुच्यते। अग्नये गृहपतय इत्यादिषु दृष्टत्वात्। देवेषु देवानामन्तर्मध्ये द्योतनः स्वतेजसा दीप्यमानो मेधिरो मेधावी। अथवा मेधाकांचिणाम् स्तोतॄणाम् मेधादातृत्वेन मेधायुक्तः। एवम्बिध एकोऽग्निर्योनिं स्थानभूतमाहवनीयादिकमा ससाद। हविःस्वीकरणार्थमासीदति।

३। देवेष्वन्तर्देवानाम् मध्ये द्योतमानो निध्रुविर्निश्चले स्थाने वर्त्तमानः। यद्वा। नितरां गमनमस्यास्तीति निध्रुविः सर्व्वदा गच्छन्। अथवा संग्रामेषु शत्रूणां पुरतोऽतिशयेन स्थैर्य्यवान्। एतादृश एकस्त्वष्टृनामको देव आयसीमयोमयधारां वाशीं। वाशृ शब्दे। शब्दयत्याक्रन्दयति शत्रूननयेति वाशी तच्चणसाधन कुठारः। तं स्वकीये हस्ते बिभर्त्ति। धारयति।

४। अत्र वज्रलिङ्गादिन्द्रो देवता। एक इन्द्र आहितम् स्वकीयहस्ते निहितम् वज्रमेतन्नामकमायुधं बिभर्त्ति।

धत्ते। स एवेन्द्रस्तेन निहितेन वज्रेण वृत्राण्यावरकाणि रक्षांसि पापानि वा जिघ्नते। भृश हन्ति।

५। अत्र जलाषभेषज इत्यनेन रुद्रोऽभिधीयते। शुचि। शुच दीप्तौ। सर्वतः स्वतेजसा दीप्यमानः। यद्वा। शुच शोके। शत्रूणाम् शोचयिता दुःखयिता। अत एवोग्र उद्गूर्णबलो जलाषभेषजो रोगापनयनेन सुखकरभैषज्यवान्। यद्वा। स्तोतॄणाम् दुःखरूपसंसारच्छेदनेन सुखकारिभिषग्रूपः। प्रथमो दैव्यो भिषगित्यादिश्रुतिभिरस्य भिषक्त्वं श्रूयते। तादृश एको रुद्रस्तिग्मं तीक्ष्णधारमायुधम्। आयुध्यति संप्रहरति शत्रूननेनेत्यायुधम्। पिनाकः। तं स्वकीये हस्ते बिभर्त्ति।

६। पथ इति लिङ्गेन पूषा निगद्यते। सं पूषन्नध्वनस्तिर। ऋ० १।४२।१। इत्यादिषु दृष्टत्वात्। एकः पूषनामको देवः पथो मार्गान् पीपाय। प्यायतिर्वर्धनकर्माप्यत्र रक्षणार्थः। येऽग्निहोत्रादि कर्म कुर्व्वन्ति तेषां स्वर्गमार्गं ये दुष्कृतं कर्म्म कुर्व्वन्ति तेषां यातनामार्गं च रक्षति। उभयेषां मार्गविपर्य्ययो यथा न भवति तथा पालयतीत्यर्थः। एष सोऽयं पूषा निधीनाम् पृथिव्याम् निहितानि धनानि वेद। वेत्ति। ज्ञात्वा स्तोतॄणाम् तानि ददातीत्यर्थः। अत्र दृष्टान्तः। तस्करो यथा। यथा चोरः पथि गच्छताम् पुरुषाणाम्

धनहरणार्थम् मार्गं रक्षति तथा च स चोरो गृहे निहितानि ज्ञात्वा तदाहृत्य स्वसहायेभ्यो यथा तानि ददाति तद्वत् ।

७ । उरुगायो वि चक्रम इति पदलिङ्गाद्विष्णुरुच्यते । उरुगाय उरुभिर्बहुभिर्गातव्यः । यद्वा । बहुषु देशेषु गन्ता बहुकीर्त्तिर्वा । सर्वाञ्छत्रून् स्वसामर्थ्येन शब्दयत्याक्रन्दयतीति वोरुगायः । एतादृश एकोऽसहायो विष्णुस्त्रीणि पदानि भुवनानि वि चक्रमे । साधु पादेन विक्रान्तवान् । वेः पादविहरणे । पा० १।३।४७ । इति क्रमतेरात्मनेपदम् । यत्र येषु लोकेषु देवास इन्द्रादयो देवा मदन्ति यजमानदत्तैर्हविर्भिर्माद्यन्ति तानि वि चक्रम इत्यन्वयः ।

८ । एकया सहेति लिङ्गादश्विनावभिधीयेते । द्वा द्वौ द्वित्वसंख्योपेतावश्विनौ विभिः । वी गत्यादिषु । क्विप् । छान्दसो ह्रस्वः । गमनसाधनैरश्वैश्चरतः । सञ्चरेते । किञ्चेमावश्विनावेकया सूर्याख्यया ताभ्या स्वयव्रतया स्त्रिया सह प्र वसतः । प्रवासं सर्व्वत्र गमनम् कुरुतः । प्रवासे दृष्टान्तः । प्रवासेव । यथा प्रवासिनौ द्वौ पुरुषावेकया स्त्रिया सह प्रवसतस्तद्वत् ।

। सम्राजाविति लिङ्गेन मित्रावरुणावभिधीयेते । उपमोपमौ परस्परम् स्वकान्त्योपमानभूतौ । यद्वा । उपमीयत आभ्याम् सर्वमित्युपमौ सर्व्वस्य । एतावेव सम्राजा

सम्राजौ सम्यग्दीप्यमानौ सर्पिरासुती । सर्पिर्घृतमाभ्याम-सूयत इति सर्पिरासुती । घृतहविष्कौ द्वा द्वौ मित्रावरुणौ दिवि द्युलोके सदः । सीदन्त्यत्रेति सदः स्थानम् तच्चक्राते । अकार्ष्टाम् ।

१० । एकेऽत्रयो महि महत्साम त्रिवृत्पञ्चदशादि मन्वत । अमन्वत । तदेवार्चन्तः पूजयन्त एतादृशा अत्रय-स्तेनोक्तेन साम्ना सूर्यमरोचयन् । अदीपयन् । त एवात्र देवता ।

—o—

# SOMA VIII. 48.



स्वादोरभक्षीति पञ्चदशर्चं षष्ठं सूक्तं काण्वस्य प्रगाथस्यार्षं सोमदेवताकं त्रैष्टुभम्। पञ्चमी जगती। सोमो देवता। तथा चानुक्रान्तम्। स्वादोः पञ्चोना प्रगाथः सौम्यं त्रैष्टुभं पञ्चमी जगतीति। सूक्तविनियोगो लैङ्गिकः।

१। अहं प्रगाथः सुमेधा. शोभनप्रज्ञः स्वाध्यः स्वाध्ययनः सुकर्मा वरिवोवित्तरस्यातिशयेन पूजां लभमानस्य स्वादोः सुष्ठुदनीयस्य स्वादुभूतस्य वयसोऽन्नस्य। एतः कर्मणि षष्ठ्र.। उक्तलक्षणं वयोऽन्नं सोमाख्यमभक्षि। भक्षयेय। य यदन्न विश्वे देवाः सर्वेऽपीन्द्रादय उतापि च मर्त्यासो मर्त्या मनुष्या मधु ब्रुवन्तो मनोहरमेतदिति शब्दायन्तोऽभि सञ्चरन्ति अभिसङ्गच्छन्ते प्राप्नुवन्ति तदन्नमभक्षीति।

२। अग्नीषोमप्रणयनेऽन्तश्चेत्येषा। तथा च सूत्रितम्। अन्तश्च प्रागा अदितिर्भवासि श्येनो न योनिं सदनं धिया कृतम्। आ० ४।१०। इति।

हे सोम त्वमन्तश्च प्रागाः ।/ हृदयस्य यागागारस्य वान्त-र्गच्छसि । गत्वा चादितिरदीनस्त्वं दैव्यस्य हरस. क्रोधस्या-वयाता पृथक्कर्त्ता भवासि । भवसि । हर इति क्रोध-नाम । हे इन्दो सोम त्वमिन्द्रस्य सख्यं जुषाणः सेवमानः श्रौष्टी श्रुष्टीति क्षिप्रनाम । तत्सम्बन्धी श्रौष्टी । क्षिप्रगाम्यश्वो धुरमिव रायेऽस्माकं धनलाभायान्वृध्याः । अनुगच्छसि । अथवाश्वो यथा धुरं वृत्वाभिमतदेशं प्रापयति तद्वदस्मान् प्रापय । अनुपूर्व ऋधिर्गत्यर्थ ।

३ । अपाम सोममित्यादिके द्वे सोमपानोत्तरकालीनास्या-भिमर्शने हृदयाभिमर्शने च क्रमेण विनियुक्ते । तथा च सूत्रितम् । अपाम सोममसृता अभूम शं नो भव हृद आपीत इन्दविति सुखहृदये अभिमृशेरन्निति ।

हे अमृतामरण सोम त्वामपाम । पानं करवाम । करवाम । कुर्म । ततोऽमृता अभूम । भवेम । यस्मात्त्व-ममृतः अतस्तव पानाद्वयमप्यमृताः स्याम । पश्चाज्ज्योति-र्द्योतमानं स्वर्गमगन्म । अविदाम ज्ञातवन्तो देवान् । तथा-भूतानस्मान्नूनमिदानीमरातिः शत्रुः किं कृणवत् । कुर्य्यात् । किमु किं वा मर्त्यस्येदानीं मनुष्यभूतस्य मम धूर्तिर्हिंसकः किं कृणवत् । कुर्य्यात् ।

४ । हे इन्दो सोम अस्माभिः पीतस्त्वं नोऽस्माकं

हृदे हृदयाय शं सुखमा भव। सुखभवने दृष्टान्तद्वयम्। पिता सूनवे स्वात्मजाय यथा सुखाय भवति यथा वा सखा-हितान्निवर्त्त्य हिते स्थापयिता सखायं स्वसख्ये यथा सुशिवः सुसुखो भवति। शिवमिति सुख-नाम। तद्वत्त्वमपि भव। किं च हे उरुशंस बहुभिर्बहुधा वा शंसनीय बहुकीर्त्ते सोम धीरो धीमांस्त्वं नोऽस्माकं जीवसे जीवनायायुरायुष्यं प्र तारी। प्रवर्धय।

५। इमे पीता यशसो यशस्करा उरुष्यवोऽस्माकं रक्षाकामाः सोमा गावो गोविकारभूता बध्रो रथं न रथमिव। ता यथा रथं विस्रस्तं पर्वसु समनाह्य सन्दधते तद्वत्मा पीताः सोमाः पर्वसु सन्नह्यन्तु। किञ्च ते सोमा मा मां विस्रसो विस्रस्ताच्चरित्राच्चरणादनुष्ठानाद्रक्षन्तु। सोमः पीतश्चेत्कर्म ह्यविस्रस्तं भवति। उतापि च मा मा स्रामाद्रागेः सकाशादिन्दवः पीता यवयन्तु पृथक्कुर्वन्तु।

६। हे सोम पीतस्त्वं मा मां मथितमग्निं नाग्निमिव सन्दिदीपः। सन्दीपय। प्र चक्षय च चक्षुषः सन्धुक्षणेन नोऽस्मान् वस्यसोऽतिशयेन वसुमतः कृणुहि। कुरु। अथाधुना हि खलु ते त्वा हे सोम मदे मदाय मन्ये। स्तौमि। तथा सति रेवानिव धनवानिव। इवेति सं-प्रत्यर्थे। पुष्टिमस्मत्पोषमच्छ प्र चर। अभिगच्छ।

७। इषिरेणेच्छावता मनसा सुतस्य ते सुतमभिषुतं त्वा भक्षीमहि। पित्र्यस्य पितृसम्बन्धिनो धनस्येव धनमिव। पित्र्यं धनं यथैषणेन मनसोपभुञ्जते तद्वत्। भक्षित हे सोम राजन् स्वामिन् नोऽस्माकमायूंषि प्र तारीः। प्रवर्धय। वासराणि जगद्वासकान्यहानि सूर्य्य इव। अत्रैषणेन वैषणेन वार्षणेन वा। नि० ४।७। इत्यादि निरुक्तं ज्ञातव्यम्।

८। हे सोम राजन् नोऽस्मान् स्वस्त्यविनाशाय मृडय। सुखय च। व्रत्या व्रतिनो वयं तव स्मसि। स्वभूताः स्म। तस्य त्वं स्वकीयं तव विद्धि। जानीहि। अथवा तव त्वमित्यर्थः। त्व जानीहि। किं च हे इन्दो दक्षः प्रवृद्धोऽस्मच्छत्रुरलर्त्ति। गच्छति। उतापि च मन्युः क्रोधः क्रुद्धो वालर्त्ति। तादृशस्योभयविधस्यार्य्योऽरेरनुकाम यथाकामं नोऽस्मान्मा परा दाः। परादेहि।

९। हे सोम देव त्वं नोऽस्माक तन्वस्तनोरङ्गस्य गोपा हि रक्षिता खलु। अतो गात्रे गात्रे सर्वेष्वङ्गेषु नृचक्षा नृणा कर्मनेतृणां द्रष्टा त्वं निषसत्थ। निषीदसि यद्यद्यपि ते तव व्रतानि कर्माणि वयं प्रमिनाम हिंस्मः तथापि हे देव स त्वं वस्यः श्रेष्ठान्नोऽस्मान् सुषखा शोभनसखा सन् मृड। सुखय।

१०। अहं प्रगाथ ऋदूदरेणोदराबाधकेन सोमेन सख्या सचेय। सङ्गच्छेय। सङ्गतो भवामि। ऋदूदरः सोमो

मृदूदरः। नि० ६।४। इति यास्कः। यः सोमः पीतः सन् मा मां न रिषेत् न हिंस्येत् हे हर्यश्वेन्द्र। सौम्ये सूक्त इन्द्रस्य कीर्त्तनं सोमस्येन्द्रस्वामिकत्वान्न विरुद्धम्। योऽयं सोमोऽस्मे अस्मासु न्यधायि निहितोऽभूत् तस्मै सोमाय प्रतिरमायुर्जठरे चिरकालावस्थानमिन्द्रमेमि। याचे।

११। त्यास्ता अनिराः प्रेरयितुमशक्या अमीवा बलवत्यः पीडा अपास्थुः। अपगच्छन्तु। यास्तमिषीचीर्बलवत्योऽस्मान्निनितरामत्रसन् प्राप्नुवन् कम्पयन्ति तथाभैषुः। अपगमे कारणमाह। यस्मात् सोमो विहाया महान् सन्नस्मानारुहत् आगमत् प्राप्तवान् अतोऽपास्थुरिति भावः। यत्र यस्मिन् सोमे पीत आयुरायुष्य प्रतिरन्ते वर्धयन्ति मनुष्यास्त सोममगन्मेति।

१२। हे पितरः य इन्दुर्हृत्सु पीतः सन्नमर्त्यो मृतिरहितः सन्नाविवेश मर्त्यान्नोऽस्मान् तस्मै सोमाय हविषा वधेम। परिचरेम। अस्य सोमस्य मृडीके सुखे सुमतौ चानुग्रहबुद्धौ च स्याम। भवेम।

१३। महापितृयज्ञे सोमाय पितृमते पुरोडाशमित्यत्र त्वं सोमेति याज्या। सूत्रित च। त्व सोम पितृभिः सविदानो बर्हिषदः पितर ऊत्यर्वाक्। आ० २।१८। इति। तृतीयसवने सोमस्य चरोरपीयं याज्या। त्वं सोम पितृभिः संविदान इति सौम्यस्य। आ० ५।१८। इति हि सूत्रितम्।

हे सोम त्वं पितृभिः सह संविदानः सगच्छमानो द्यावापृथिवी द्यावापृथिव्यावन्वा ततन्थ। क्रमेण विस्तारयसि। तस्मै सोमाय हविषा विधेम। परिचरेम। वयं रयीणां धनानां पतयः स्याम। भवेम।

१४। हे त्रातारो रक्षितारो हे देवाः नोऽस्मानधिवोचत। अधिवचनं कुरुत। किञ्च नोऽस्मान्निद्राः स्वप्ना मेशत। ईश्वरा मा भूवन् बाधितुम्। उतापि च जल्पिर्निन्दकोऽस्मान्मा निन्दतु। वय सोमस्य प्रियासः प्रियाः स्याम विश्वह सर्वेष्वप्यहःसु। सर्वदेत्यर्थ.। सुवीरासः शोभनपुत्रा' सन्तो विदथं स्तोत्रमा वदेम। आभिमुख्येन वदेम। अथवा। सुपुत्रा विदथं गृहमा वदेम। आवदनं पुत्रपौत्राणां धनेनोपच्छन्दनम्।

१५। त्वं न सोम विश्वत इति सौम्ये पशौ हविषोऽनुवाक्या। सूत्रितं च। त्वं नः सोम विश्वतो वयोधा या ते धामानि दिवि या पृथिव्याम्। आ० ३।७ इति।

हे सोम त्वं नोऽस्माकं विश्वतः सर्वाभ्यो दिग्भ्यो वयोधा अन्नदाता। तथा त्वं स्वर्वित् स्वर्गलम्भको नृचक्षाः सर्वमनुष्यद्रष्टा त्वमा विश। हे इन्दो त्वं सजोषाः सह प्रीयमाणः सम्नूतिभिः सह। अथवोतया गन्तारो मरुतः। तैः सहितः सन् पश्चातात् पश्चादुत वा पुरस्तात्त्व पाहि।

---

# Funeral Hymn X. 14.

परेयिवांसमिति षोड़शर्चं चतुर्दशं सूक्तं विवस्वतः पुत्रस्य यमस्यार्षम्। अङ्गिरसो नः पितरो नवग्वा इति षष्ठ्या अङ्गिरः पित्रथर्वभृगुलक्षणा लिङ्गोक्ता देवताः। प्रेहीत्याद्यास्तिस्रो लिङ्गोक्त-देवताकाः पितृदेवताका वा। अति द्रव सारमेया-वित्यादिकस्तृचः सरमापुत्रौ यौ श्वानौ परलोक-मार्गमभितः स्थितौ तद्देवताकः। शिष्टा यम-देवत्याः। यमाय सोममिति त्रयोदश्याद्या अनु-ष्टुभः। यमाय मधुमत्तममित्येषा बृहती। आदितो द्वादश त्रिष्टुभः। तथा चानुक्रान्तम्। परेयिवांसं षोड़श यमो यामं षष्ठी लिङ्गोक्तदेवता पराश्च तिस्रः पित्र्या वा तृच श्वभ्यां परा अनुष्टुभो बृहत्युपान्त्येति। गतः सूक्तविनियोगः। महापितृ-यज्ञे यमयागाख्या याज्या। सूत्रितं च। इमं

यम प्रस्तरमा हि सीदेति द्वे परेयिवांसं प्रवतो महीरन्विति ।

१ । हे मदीयान्तरात्मन् यजमान वा त्वं राजानं पितॄणा स्वामिनं यम हविषा पुरोडाशादिना दुवस्य परिचर । कीदृशम् । प्रवतः प्रकृष्टकर्म्मवतो भूलोकवर्त्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्महीः तत्तद्भोगोचितभूप्रदेशविशेषाननु परेयिवांस क्रमेण मरणादूर्ध्वं प्रापितवन्तम् तथा बहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतार्थं पन्था स्वर्गस्योचितं मार्गमनुपस्पशानमबाधमानम् । पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः । वैवस्वतं विवस्वतः सूर्यस्य पुत्र जनाना पापिना सङ्गमनं गन्तव्यस्थानरूपम् ।

२ । प्रथमः सर्वेषा मुख्यः यमः नोऽस्माकं प्रजाना गातुं शुभाशुभनिमित्त विवेद जानाति । एषा गव्यूतिर्नापभर्त्तवा उ । अतिशयज्ञानयोगाद्यमस्य न केनचिदपहर्तुमपनेतुं शक्यत इत्यर्थः । यत्र यस्मिन्मार्गे नोऽस्माकं पूर्वे पितरः परेयुः । एना अनेन मार्गेण गच्छन्तो जज्ञाना जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूतागतीरनु गच्छन्ति ।

३। आग्निमारुते मातली कव्यैरित्येषा धाय्या। सूचितं च। इमं यम प्रस्तरमा हि सीद मातली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परास इति।

मातली। मातलिरिन्द्रस्य सारथिः। तद्वानिन्द्रो मातली। स कव्यैः कव्यभाग्भिः पितृभिः सह वव्रधानो वर्धमानो भवति। यमश्चाङ्गिरोभिः: पितृविशेषैः सह वर्धमानो भवति। तत्र देवा इन्द्रादयो यांश्च कव्यभागादीन् पितॄन्वव्रधुर्वर्धयन्ति ये च कव्यभागादयः पितरो देवानिन्द्रादीन्वर्धन्ति तेषां मध्ये अन्ये इन्द्रादयः स्वाहा मदन्ति स्वाहाकारेण हृष्यन्ति अन्ये पितरः स्वधया स्वधाकारेण हृष्यन्ति।

४। महापितृयज्ञे यमस्य इमं यमेत्यादिके द्वे अनुवाक्ये। इम यमेत्येषाग्निमारुतेपि धाय्या। सूत्रं पूर्वमेवोदाहृतम्।

हे यम अङ्गिरोभिः एतन्नामकैः पितृभिः संविदानः ऐकमत्यं गतः त्वमिमं प्रस्तरं विस्तीर्णं यज्ञविशेषम् आसीद आगत्योपविश। हि यस्मादेवं तस्मात्कविशस्ता विद्वद्भिर्ऋत्विग्भिः प्रयुक्ता मन्त्रास्त्वा त्वाम् आ वहन्तु। हे राजन् एना एतेन हविषा तुष्टो मादयस्व यजमानं हर्षय।

५। हे यम वैरूपैः विविधरूपयुक्तैर्वैरूपसामप्रियैर्वा

यज्ञियेभिः यज्ञयोग्यैः अङ्गिरोभिः सह आ गहि आगच्छ। आगत्य च इह अस्मिन्यज्ञे मादयस्व। यजमानं हर्षय। यो विवस्वांस्ते तव पितास्ति अस्मिन् यज्ञे तं विवस्वन्तं हुवे आह्वयामि। स चास्तीर्णे वर्हिषि आ निषद्योपविश्य यजमानं हर्षयतु।

६। अङ्गिरसः अङ्गिरोनामकाः अथर्वाणः अथर्वनामकाः भृगवः भृगुनामकाश्च नोऽस्माकं पितरो नवग्वा अभिनवगमनयुक्ताः। यद्वा नूतनवत्प्रीतिजनका इत्यर्थः। ते च सोम्यासः। सोममर्हन्तीति सोम्याः। यज्ञियानां यज्ञार्हाणां तेषां सुमतौ अनुग्रहयुक्तायां बुद्धौ वय स्याम सर्वदा तिष्ठेम।

७। सत्रमध्ये दीक्षितस्य मरणे प्रेहीत्याद्याः पञ्चर्चस्तृतीयावर्जिता होत्रा शसनीयाः। सूचितम् च। प्रेहि प्रेहि पथिभिः पूर्व्येभिरिति पञ्चाना तृतीयामुद्धरेदिति।

यत्र यस्मिन् स्थाने नोऽस्माक पूर्वे पुरातनाः पितरः पितामहादयः परेयुः। पूर्व्येभिः पूर्वस्मिन् काले भवैः। अनादिकालप्रवृत्तैरित्यर्थः। पथिभिर्मार्गैः हे मत्पितस्तत्स्थान प्रेहि प्रगच्छ शीघ्रं गच्छ। गत्वा च स्वधया अमृतान्नेन मदन्ता मदन्तौ तृप्यन्तौ राजाना राजानौ उभा उभौ यमं देवं द्योतमानं वरुण च पश्यासि पश्य।

८। हे मदीय पितः ततस्त्वं परमे उत्कृष्टे व्योमन् व्योमनि स्वर्गाख्ये स्थाने स्वभूते पितृभिः सह सं गच्छस्व। इष्टापूर्त्तेन श्रौतस्मार्त्तदानफलेन सं गच्छस्व। तत इष्टापूर्त्तेन महागस्य अवद्य पापं हित्वा परित्यज्य अस्तं ब्रियमानाख्य गृहमेहि आगच्छ। ततः सुवर्चाः। तृतीयार्थे प्रथमा। सुवर्चसा शोभनदीप्तियुक्तेन तन्वा स्वशरीरेण सं गच्छस्व।

९। पैतृमेधिके कर्मणि श्मशानायतनं प्रोक्षत्यपेत वीतेति। सूत्रितं च। गर्त्तोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षत्यपेत वीत वि च सर्पतात इति।

श्मशाने पूर्वं स्थिता हे पिशाचादयः अतः अस्मात् मृतयजमानदहनस्थानादपेत अपगच्छत। वीत विशेषेण गच्छत। वि सर्पत च। इदं स्थानं परित्यज्य नानाभावेन दूरतरं देशं गच्छतेत्यर्थः। पितरः अस्मै मृतयजमानस्यार्थाय एतं लोकमिदं दहनस्थानम् अक्रन् यमस्याज्ञया अन्वकुर्वन्। यमोऽप्यहोभिर्दिवसैः अद्भिः अभ्युक्षणोदकैः अक्तुभिः रात्रिभिर्व्यक्तं सङ्गतम्। शुद्धिनिमित्तैः कालोदकादिभिः शोधितमित्यर्थः। अवसानं दहनस्थानम् अस्मै मृतयजमानस्यार्थाय ददाति दत्तवान्।

१० । अनुस्तरण्या वृक्कौ पार्श्वयोराम्रफलाकृती । तावुद्धृत्य प्रेतस्य हस्तयोर्निदधात्यति द्रव सारमेयाविति द्वाभ्याम् । सूत्रितं च । वृक्कावुद्धृत्य पाण्योरादध्यादति द्रव सारमेयौ श्वानाविति ।

हे अग्ने साधुना पथा समीचीनेन मार्गेण श्वानावुभौ अति द्रव अतिक्रम्य गच्छ । यमसम्बन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नये-त्यर्थः कीदृशौ श्वानौ । सारमेयौ । सरमा नाम काचित् प्रसिद्धा देवशुनी । तस्याः पुत्रौ चतुरक्षौ उपरिभागे पुन-रप्यक्षिद्वयं ययोस्तादृशौ । अथ शोभनमार्गेण गमना-नन्तरं ये पितरो यमेन सधमादं सहर्षं मदन्ति प्राप्नुवन्ति तान् सुविदत्रान् सुष्ठुभिज्ञान् पितॄन् उपेहि उपगच्छ ।

११ । हे राजन् हे यम ते त्वदीयौ यौ श्वानौ विद्येते ताभ्यां हे राजन् यम एनं प्रेतं परि देहि रक्षणार्थं प्रयच्छ । कीदृशौ श्वानौ । रक्षितारौ यमगृहस्य रक्षकौ चतुरक्षौ अक्षिचतुष्टययुक्तौ पथिरक्षी मार्गस्य रक्षकौ । नृचक्षसौ मनुष्यैः ख्याप्यमानौ । श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषाः तौ प्रख्यापयन्ति । ताभ्यां श्वभ्यां दत्त्वा अस्मै प्रेताय स्वस्ति च क्षेममपि अनमीवं च रोगाभावमपि धेहि सम्पादय ।

१२ । यमस्य सम्बन्धिनौ दूतौ श्वानौ जनाँ अनु

ज्योतिर्गौरायुरिति त्रयो यागविशेषास्त्रिकद्रुका उच्यन्ते। तान् प्रत्यक्षभावाय संरक्षणार्थं च पतति। यमः तान् प्राप्नोति। षट्सङ्ख्याका उर्वीः भूमीः कृताकृतप्रत्यवेक्षणाय प्राप्नोति। ताश्चोर्व्यः शाखान्तरमन्त्रे समाम्नाताः। षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोर्क् च सूनृता चेति। एकमित् एकमेव बृहत् महत् जगत् यमश्च प्रतिपालनीयः प्राप्नोति। किं च यानि त्रिष्टुब्गायत्र्यादीनि छन्दांसि सन्ति सर्वाणि तानि छन्दांसि यमे आहिता आहितानि ऋत्विग्भिः स्तुतित्वेनावस्थितानि।

## PITARAS X. 15.

उदीरतामिति चतुर्दशर्चं पञ्चदशं सूक्तम्। अत्रानुक्रम्यते। उदीरताम् षडूना शङ्खः पित्र्यं जगत्येकादशी। यामायनाः परे पञ्चेति वचनाद्यमपुत्रः शंखाख्य ऋषिः। अग्निष्वात्ता इत्येषा जगती शिष्टास्त्रिष्टुभः। पितरो देवता। गतः सूक्तविनियोगः। अष्टकायामुदीरतामवर इत्याद्या अष्टावृचो होमार्थाः। सूत्रितं च। उदीरतामव उत्परास इत्यष्टाभिर्हुत्वा। महापितृयज्ञे पितरः सोमवन्त इत्यस्यानुवाक्योदीरतामित्येषा। सूत्रितं च। पितरोऽग्निष्वात्ता यम उदीरतामवर उत्परासः। आ० २।१९। इति। आग्निमारुतेऽप्येषा धाय्या। सूचितं च। मातली कव्यैर्यमो अङ्गिरोभिरुदीरतामवर उत्परासः। आ० ५।२०। इति।

१। त्रिविधाः पितर उत्तमा मध्यमा अधमाश्चेति। यथाविध श्रौतं कर्मानुष्ठाय पितृत्वम् प्राप्ता उत्तमाः। स्मार्त्तकर्ममात्रपरा मध्यमाः। अत्रापि कैश्चित्संस्कारैर्विकला अधमाः। एतदेवाभिप्रेत्य ये अग्निदग्धा ये अनग्निदग्धा इत्यादि मन्त्र आम्नातः। तेष्ववरे निकृष्टा उदीरताम्। उत्तमं हवि प्राप्नुवन्तु। परास उत्तमा' पितर उदीरताम्। मध्यमा पितरश्चोदीरताम्। ते सर्वेऽप्यस्मद्विषये सोम्यासः सोम्या अनुग्रहपराः सन्तु। ये पितरोऽवृका वृकवदरण्यश्व-वदस्मासु हिंसामकुर्वन्त ऋतज्ञा अस्मदनुष्ठितं यज्ञं जानन्तो-ऽसुमस्मत्प्राणमीयुः रक्षितुं प्राप्ताः ते पितरो हवेष्वस्मीयेष्वा-ह्वानेषु नोऽस्मानवन्तु। रक्षन्तु।

२। महापितृयज्ञे पितरो वर्हिषद इत्यस्यैदं पितृभ्य इति द्वितीयानुवाक्या। सूत्र तु पूर्वमेवोदाहृतम्। इदं पितृभ्य इत्येषा धाय्या। सूत्रितञ्च। आह पितॄन्त्सुविदत्राँ अवित्सीदं पितृभ्यो नमो अस्त्वद्य स्वादुष्किलायमिति चतस्रः। आ० ५।२०। इति।

पूर्वासो यजमानोत्पत्तेः पूर्वमुत्पन्ना ज्येष्ठभ्रातृपितामहा-दयो य ईयुः पितृलोक प्राप्ताः। ये चान्य उपरासो यजमान-जन्मन उपर्य्युत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादय ईयुः पितृलोकं प्राप्ताः। येऽप्यन्ये पार्थिवे पृथिवीसम्बन्धिनि रजसि रजो-

गुणकार्य्येऽस्मिन् कर्मण्या निषत्ता हविः स्वीकर्त्तुमागत्योपविष्टा'। ये वा केचिदन्ये बन्धुवर्गरूपाः पितरो विन्नु बन्धुरूपास् प्रजास्वा निषत्ताः श्राद्धादिस्वीकारायागत्योपविष्टाः। कीदृशीषु विन्नु। सुवृजनासु। वृज्यते परित्यज्यते दारिद्र्यमनेनेति वृजनं धनम्। शोभन वृजन यासां ता सुवृजनाः। तादृशीषु। धनसमृद्धासु श्राद्धादिकर्मपरास्वित्यर्थः। सर्वेभ्य उक्तेभ्य' पितृभ्योऽद्यास्मिन् कर्मणीद नमोऽस्तु। अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु।

३। अहं यजमानः सुविदत्रान् मदीया भक्तिं सुष्ठु जानत पितॄनविन्दि। आभिमुख्येन लब्धवानस्मि। विष्णोर्व्यापिनो यज्ञस्य नपातं च विनाशाभावं च विक्रमणं च विशेषेण प्रवृत्तिं च लब्धवानस्मि। ये पितरो बर्हिषदो बर्हिषि सीदन्ति त इहास्मिन् कर्मण्यागमिष्ठाः। अतिशयेनागताः। आदरपूर्वं समागत्य स्वधया पुरोडाशाद्यन्नेन सह सुतस्याभिषुतस्य सोमलक्षणस्य पित्वः पितोरन्नस्य भाग भजन्त। सेवन्ते। उपयुञ्जते।

४। हे बर्हिषदः। यज्ञे सीदन्तीति बर्हिषदः। अत्रापि ये वै यज्वानस्ते पितरो बर्हिषद इत्यत्र श्रुतत्वाद्यागं कृत्वा प्रेत्य पितृलोकं प्राप्ता बर्हिषदः। तादृशा हे पितरः अर्वागर्वाचीनानामस्माकमूती रक्षा भवद्भिः कर्त्तव्येति शेषः।

वो युष्मदर्थमिमा हव्यैतानि हवींषि चकृम । अतस्तानि जुषध्वम् । ते हविर्जुष्टवन्तो यूयं शन्तमेन सुखतमेनावसा रक्षणेन निमित्तभूतेना गत । आभिमुख्येनास्मान् प्राप्नुत । अथानन्तरं नोऽस्मभ्य शं सुखं योर्दुःखवियोगमरपः पापरहित च दधात । दत्त ।

५ । महापितृयज्ञे पितरः सोमवन्त इत्यस्य याज्योपहूताः पितर इत्येषा । सूत्रित च । उपहूताः पितरः सोम्यासस्त्व सोम प्र चिकितो मनीषा । आ० २।१९। इति ।

सोम्यासः सोम्या अस्मदनुग्रहपराः सोमसम्पादिनो वा पितरो बर्हिष्येषु यागार्हेषु प्रियेषु तृप्तिकरेषु निधिषु निधिसदृशेषु हविःषु निमित्तभूतेषु सत्सूपहूता अस्माभिराहूतास्ते पितर आ गमन्तु । आगच्छन्तु । आगत्य चेहास्मिन् कर्मण्यस्माभि. प्रयुक्ता स्तुती. स्रुवन्तु । शृण्वन्तु । श्रुत्वा चाधि ब्रुवन्तु । साधुरय यजमान इत्यादरेण कथयन्तु । ते तादृशाः पितरोऽस्मानवन्तु । रक्षन्तु ।

६ । पितृणामयं स्वाभाविको धर्मः । अथैनं पितरः प्राचीनावीतिनः सव्य जान्वाच्य । शतं २।४।२।२ । इति वचनात् । हे पितरः विश्वे सर्वे यूयं जान्वाच्य भूमौ निपात्य दक्षिणतो दक्षिणपार्श्वे निषद्योपविश्येममस्मदीयं यज्ञमभि

गृणीत। अभिष्टुत। विशिष्टहविर्योगात्परया प्रीत्या सगुणोऽयं यज्ञ इति प्रशंसतेत्यर्थः। अपि च वो युष्माकं यत्किञ्चित्कर्मवैगुण्यजनितमागोऽपराधं पुरुषता मनुष्यत्वेन हेतुना कराम वयं कृतवन्तः हे पितरः तेन केन चिदप्यपराधेन नोऽस्मान्मा हिंसिष्ट।

७। अरुणीनामारोचमानानां ज्वालानां वा देवतानां वोपस्थे समीपस्थाने वेद्याख्य आसीनास उपविष्टाः पितरः यूयं दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय रयिं धनं धत्त। दत्त। हे पितरः यूयं तस्य यजमानस्य पुत्रेभ्यो वस्वो वसु धनं प्र यच्छत। ते तादृशा यूयमिहास्मिन्नस्मदीये कर्मण्यूर्जं धनं दधात। निधत्त।

८। सोम्यासः सोमसम्पादिनो वसिष्ठा वस्तृतमाः कृताच्छादना धनवत्तमा वा नोऽस्माकं ये पूर्वे पितरः सोमपीथं सोमपानमनूहिरे आनुपूर्व्येण देवेभ्यश्च पितृभ्यश्च प्राप्नुवन्तः। दत्तवन्त इत्यर्थः। उशन् पितृभिः सह सम्भोगं कामयमानो यमः पितृपतिरुशद्भिर्यमेन सह सम्भोगं कामयमानैस्तैभिस्तैरस्मदीयैः पितृभिः सह रराणो रममाणो हवींष्यस्माभिर्दत्तानि प्रतिकामं कामं कामं प्रत्यत्तु। यानि यानि हवींषि कामयते तानि तानि भक्षयत्वित्यर्थः।

९। महापितृयज्ञेऽग्नेः कव्यवाहनस्य ये तादृशुरित्येषा-

प्रथमानुवाक्या । सूत्रितं च । ये तातृषु र्देवत्रा जेहमाना-स्त्वदग्ने काव्या त्वन्मनीषाः । आ० २।१९ । इति ।

देवत्रा देवाञ्जेहमानाः क्रमेण गच्छन्तः । क्रमेण देवत्वं प्राप्ता इत्यर्थः । होत्राविदो यज्ञान् सम्यक् कर्तुं वेदितारो-ऽर्कैरर्चनीयैः स्तोत्रैः स्तोमतष्टासः स्तोमाना च सम्यक्-कर्त्तारो ये पितरस्तातृषुः तृष्यन्ति हे अग्ने त्वं तैः पितृभि-रर्वाङस्मदभिमुख आ याहि । आगच्छ । कीदृशैः । सुविदत्रेभिः सुविदत्रैः सत्यैरविसंवादिभिः काव्यैः । काव्यं नाम पितृदेवत्यं हविः । तत्सम्बन्धिभिः । यद्वा । काव्यैः कविभिर्मेधाविभिः । स्वार्थिको यत् । घर्मसद्भिर्यज्ञ-सादिभिः ।

१० । सत्यास. सत्या ये पितरो हविरदो भक्षणयोग्यस्य हविषोऽत्तारो हविष्पाः पानयोग्यस्य हविषः पातार इन्द्रेण देवैः सरथं समानमेकं तुल्यं वा रथं दधानाः । लडर्थे शानच् । गमनाय सदा धारयन्ति । हे अग्ने तैः पितृभिः सह याहि । आगच्छ । कीदृशः । सहस्रम् । तृतीयार्थे प्रथमा । सहस्रेण बहुभिरित्यर्थः । देववन्देर्देवसम्बन्धिभिः स्तोत्रैर्युक्तः । परैः परकालीनैः पूर्वैः पूर्वकालीनैर्घर्मसद्भिर्यज्ञसादिभिर्महा-वीरसादिभिरादित्यसादिभिर्वा ।

११ । महापितृयज्ञे पितरोऽग्निष्वात्ता इत्यस्याग्नि-

ष्वात्ता पितर इत्येषा प्रथमानुवाक्या । सूत्रितं च । अग्निष्वात्ताः पितर एह गच्छत ये चेह पितरो ये च नेह । आ० २।१९ । इति ।

अग्निष्वात्ता अग्निना स्वादिता एतन्नामकाः पितरः यूयमिहास्मिन् पितृकर्मण्या गच्छत । आगत्य च हे सुप्रणीतयोऽभिपूजितप्रणयनाः यूयं सदः सदस्तत्तत्स्थानं सदत । सीदत । तत्र तत्र स्थाने यथेष्टमुपविशतेत्यर्थः । उपविश्य च बर्हिष्यासादितानि प्रयतानि सुचि हवींष्यत्त । भक्षयत । अथानन्तरं सर्ववीरं सर्वैर्वीरैः पुत्रपौत्रैरुपेत रयिं धनं दधातन । अस्मभ्य दत्त ।

१२ । महापितृयज्ञे वषट्कारक्रियायां त्वमग्न ईड़ित इत्येषा स्विष्टकृतो याज्या । सूत्रितञ्च । योऽग्निः कव्यवाहनस्त्वमग्न ईडितो जातवेद इति संयाज्ये । आ० २।१९ । इति ।

हे जातवेदः । जात सर्व जगद् वेत्तीति जातवेदाः । तथाविध हे अग्ने ईड़ितोऽस्माभिः स्तुतस्त्वं हव्यान्यस्मदीयानि हवींषि सुरभीणि सुगन्धीनि कृत्वी कृत्वावाट् । वहनं कृतवानसि । कृत्वा च पितृभ्यः प्रादाः । ते च पितरः स्वधया स्वधाकारेण दत्तं हविरक्षन् । अदन्तु । हे देव त्वमपि प्रयता प्रयत्नसम्पादितानि हवींष्यद्धि । भक्षय ।

१३। महापितृयज्ञे ये चेहेति द्वितीयानुवाक्या। सूत्रमुक्तं।

ये च पितर इहास्मत्समीपे वर्त्तन्ते ये चेह न सन्ति। यांश्च पितॄन् विद्म सन्निकृष्टत्वाज्जानीमः याँ उ च नापि च न प्रविद्म विप्रकृष्टत्वादयं न विजानीमः। यति ते यावन्तस्ते भवन्ति तान् सर्वान् यथोक्तान् हे जातवेद उत्पन्नसर्ववस्तु-विषयज्ञानाग्ने त्वं वेत्थ। जानासि। स्वधाभिर्हवि-र्लक्षणैरन्नैः सुकृतं साधु कृत यज्ञं जुषस्व। प्रीत्या गृहाण।

१४। पूर्वोक्त एव यागे ये अग्निदग्धा इत्येषा याज्या। सूत्रितं च। ये अग्निदग्धा ये अनग्निदग्धा इमं यम प्रातरमा हि सीदेति द्वे। आ० २।१९। इति।

ये पितरोऽग्निदग्धा अग्निना भस्मीकृताः। श्मशानं प्राप्ता इत्यर्थः। ये च पितरोऽनग्निदग्धाः श्मशानकर्म न प्राप्ता मध्ये दिवो द्युलोकस्य मध्ये स्वधया हविर्लक्षणेनान्नेन मादयन्ते तृप्यन्ति हे अग्ने स्वराट् स्वकर्मोपभोगेन दीप्य-मानस्तेभिस्तैः पितृभिः सहितः सन्नसुनीतिं प्राणानां विषयेषु नेतारमस्मत्पित्रन्तरात्मानमेतां तन्वमेतद्देवताशरीरं यथावशं यथाकामं कल्पयस्व। समर्थयस्व। ग्रासयेत्यर्थः।

—०—

# Gambler X. 34.



प्रावेपा इति चतुर्दशर्चं पञ्चमं सूक्तमैलूषस्य कवषस्यार्षं मुजवतः पुत्रस्याक्षाख्यस्य वा। सप्तमी जगती शिष्टास्त्रयोदश त्रिष्टुभः। अत्र द्वादश्य-क्षान् स्तौति नवम्याद्या च सप्तमी। अतस्तास्त-द्देवत्याः। त्रयोदशी कृषिं स्तौति। अतस्तस्याः सा देवता। एवं पञ्च ..ताः। शिष्टाभिर्नवभिः कितवोऽक्षाश्च निन्द्यन्ते। अतस्ता अपि तद्देवत्याः। तथा चानुक्रान्तं। प्रावेपाः षडूना मौजवान्वा-क्षोऽक्षकृषिप्रशंसा चाक्षकितवनिन्दा च सप्तमी जगतीति। गतो विनियोगः।

१। बृहतो महतो विभीतकस्य फलत्वेन सम्बन्धिनः प्रवातेजाः प्रवणे देशे जाता इरिणे आस्फारे वर्वृतानाः प्रवर्त्त माना. प्रावेपाः प्रवेपिणः कम्पनशीला अक्षा मा मा मादयन्ति। हर्षयन्ति। किञ्च जाग्टविजयपराजय-योर्हर्षशोकाभ्याम् कितवानां जागरणस्य कर्त्ता विभीदको

विभीतकविकारोऽचो मह्यम मामच्छान्। अचच्छदत्। अत्यर्थं मादयति। तत्र दृष्टान्त'। सोमस्येव यथा सोमस्य मौजवतस्य। मुजवति पर्वते जातो मौजवत:। तस्य। तत्र ह्युत्तम' सोमो जायते। भक्ष. पान यजमानान्देवांश्च मादयति तद्वदित्यर्थ:। तथा च यास्क'। प्रवेपिणो मा महतो विभीतकस्य फलानि मादयन्ति। प्रवातेजा: प्रवणेजा इरिणे वर्त्तमाना इरिण निर्ऋणमृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा सोमस्येव मौजवतस्य भचो मौजवतो मुजवति जातो मुजवान पर्वतो मुञ्जवान् मुञ्जो विमुच्यत इषीकयेषीकेषतेर्गतिकर्मण इयमपोतरेषीकैतस्मादेव विभीतको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्। नि ९।८। इति।

२। एषास्मदीया जाया मा मा कितवं न मिमेथ न च चुक्रोध न जिह्रीडे न च लज्जितवती। सखिभ्योऽस्मदीयेभ्य: कितवेभ्य: शिवा सुखकर्थ्यासीत्। अभूत्। उतापि च मह्य शिवासीत्। इत्थमनुव्रतामनुकूलां जायामेकपरस्यैक पर: प्रधानं यस्य तस्याचस्य हेतो: कारणादहमपारोधं। परित्यक्तवानस्मीत्यर्थ:।

३। श्वश्रूर्जायाया माता गृहगतं कितवं द्वेष्टि। निन्दतीत्यर्थ'। किञ्च जाया भार्य्यापि रुणद्धि। निरुणद्धि।

अपि च नाथितो याचमानः कितवो धनं मर्डितारं धनदानेन सुखयितारम् न विन्दते। न लभते। इत्थं वुद्ध्या विमृशन्नहं जरतो वृद्धस्य वस्नस्य। वस्नं मूल्य। तदर्हस्याश्वस्येव कितवस्य भोगं न विन्दामि। न लभे।

४। यस्य कितवस्य वेदने धने वाजी वलवानच्चो देवोऽगृधत् अभिकाङ्क्षा करोति तस्यास्य कितवस्य जाया भार्थ्यामन्ये प्रतिकितवाः। परि मृशंति। वस्त्रकेशाद्याकर्षणेन संस्पृशन्ति। किञ्च पिता जननो च भ्रातरः सहोदराश्चैन कितवमाहुः। वदन्ति। न वयमस्मदोयमेनं जानीमः। रज्ज्वा बद्धमेतं कितवं हे कितवा. यूय नयत। यथेष्टदेश प्रापयतेति।

५। यद्यदाहमादोध्ये ध्यायामि तदानीमेभिरक्षैर्न दविषाणि। न दूषये। न परितपामि। यद्वा। न दविषाणि। न देविष्यामीत्यर्थः। परायद्भ्यः स्वयमेव परागच्छद्भ्यः सखिभ्यः सखिभूतेभ्यः कितवेभ्योऽव हीये। अवहितो भवामि। नाहं प्रथममक्षान्विसृजामीति। किञ्च बभ्रवो बभ्रुवर्णा अक्षा न्युप्ताः कितवैरवक्षिप्ताः सन्तो वाचमक्रत। शब्दं कुर्वन्ति। तदा सङ्कल्पं परित्यज्याक्षव्यसनेनाभिभूयमानोऽहमेषामक्षाणां निष्कृतं स्थानं जारिणीव यथा कामव्यसनेनाभिभूयमाना स्वैरिणी सङ्केतस्थानं याति तद्वदेमीत्। गच्छाम्येव।

६। तन्वा शरीरेण शूशुजानः शोशुचानो दोप्यमानः कितवः कोऽत्रास्ति धनिकस्तं जेष्यामीति पृच्छमानः पृच्छन् सभा कितवसम्बन्धिनीमेति। गच्छति। तत्र प्रतिदिव्ने प्रतिदेविने कितवाय क्तानि देवनोपयुक्तानि कर्माण्यक्षा दधतो जयार्थमाभिमुख्येन मर्य्यादया वा दधतोऽस्य कितवस्य काममिच्छामक्षासोऽक्षा वितिरन्ति। वर्धयन्ति।

७। अक्षास इदक्षा एवाङ्कुशिनोऽङ्कुशवन्तो नितोदिनो नितोदितवन्तश्च निकत्वान पराजये निकर्त्तनशीला श्छेत्तारो वा तपना: पराजये कितवस्य सन्तापकास्तापयिष्णवः सर्वस्वहारकत्वेन कुटुम्बस्य सन्तापनशीलाश्च भवन्ति। किञ्च जयतः कितवस्य कुमारदेष्णा धनदानेन धन्यतां लम्भयन्तः कुमाराणा दातारो भवन्ति। अपि च मध्वा मधुना सम्पृक्ताः प्रतिकितवेन वर्हणा परिवृढेन सर्वस्वहरणेन कितवस्य पुनर्हणः पुनर्हन्तारो भवन्ति।

८। एषामक्षाणा त्रिपञ्चाशस्त्र्यधिकपञ्चाशत्सङ्ख्याको व्रातः सङ्घः क्रीड़ति। आस्फारे विहरति। अक्षिका प्रायेण तावद्भिरक्षैर्दीव्यन्ति हि। तत्र दृष्टान्तः। सत्यधर्मा सविता सर्वस्य जगत प्रेरकः सूर्य्यो देव इव। यथा सविता देवो जगति विहरति तद्वदक्षाणा सङ्घ आस्फारे विहरतीत्यर्थः। किञ्चोग्रस्यचित् क्रूरस्यापि मन्यवे क्रोधायैतेऽक्षा

न नमन्ते। न प्रह्वीभवन्ति। न वशे वर्त्तन्ते। तं नमयन्तीत्यर्थः। राजा चिज्जगत ईश्वरोऽप्येभ्यो नम इन्नमस्कारमेव देवनवेलाया कृणोति। नावज्ञां करोतीत्यर्थः।

९। अपि चैतेऽक्षा नीचा नीचिनस्थले वर्त्तन्ते। तथाप्युपरि पराजयाद्भीताना द्यूतकाराणा कितवाना हृदयस्योपरि स्फुरन्ति। अहस्तासो हस्तरहिता अप्यक्षा हस्तवन्तं द्यूतकरं कितव सहन्ते। पराजयकरणेनाभि भवन्ति। दिव्या दिवि भवा अपक्तताः अङ्गारा अङ्गारसदृशा अक्षा इरिण इन्धनरहित आस्फारे न्युप्ताः शीताः शीतस्पर्शाः सन्तोऽपि हृदयं कितवानामन्तःकरणम् निर्दहन्ति। पराजयजनित सन्तापेन भस्मीकुर्व्वन्ति।

१०। क्व स्वित् क्वापि चरतो निर्वेदाद् गच्छतः कितवस्य जाया भार्य्या हीना परित्यक्ता सती तप्यते। वियोगजसन्तापेन सन्तप्ता भवति। माता जनन्यपि पुत्रस्य क्वापि चरतः कितवस्य सम्बन्धाद्धीना तप्यते। पुत्रशोकेन सन्तप्ता भवति। ऋणावाच्चपराजयादृणवान् कितवः सर्वतो विभ्यद्धन स्तेयजनितमिच्छमानः कामयमानोऽन्येषा ब्राह्मणादीनामस्तं गृहम्। अस्त पस्त्यमिति गृहनामसु पाठात्। नक्तं रात्रावुपैति। चौर्य्यार्थमुपगच्छति।

११। कितवं कितवः। विभक्तिव्यत्ययः अन्येषां

स्वव्यतिरिक्तानाम् पुरुषाणा जायां जायाभूता स्त्रियं नारीं सुखेन वर्त्तमानां सुकृतं सुष्ठु कृतं योनिं गृहं च दृष्ट्वाय मज्जाया दुःखिता गृह चासस्कृतमिति ज्ञात्वा तताप। तप्यतो पुनः पूर्वाह्णे प्रातःकाले वभ्रूवर्णानश्वान् व्यापकान-क्षान्युयुजे। युनक्ति। पुनश्च वृषलो वृषलकर्मा स कितवो रात्रावग्नेरन्ते समोपे पपाद। शीतार्त्तः सन्कृते।

१२। हे अक्षाः वो युष्माकं महता गणस्य सङ्घस्य योऽक्षः सेनानोर्नेता बभूव भवति व्रातस्य च। गणव्रातयो-रल्पो भेदः। राजेश्वरः प्रथमो मुख्यो बभूव तस्मा अक्षाय कृणोम्यहं। अञ्जलिं करोमि। अतः पर धना धनान्य-क्षार्थमह न रुणध्मि। न सम्पादयामोत्यर्थ। एतदेव दर्शयति। अहं दश दशसंख्याका अङ्गुलोः प्राचोः प्राङ्मुखोः करोमि। तदेतदहमृतं सत्यमेव वदामि। नानृत ब्रवीमीत्यर्थः।

१३। हे कितव बहु मन्यमानो मद्वचने विश्वासं कुर्वंस्त्वमक्षैर्मा दीव्यः। द्यूतं मा कुरु। कृषिमित् कृषि-मेव कृषस्व। कुरु। वित्ते कृष्या सम्पादिते धने रमस्व। मतिं कुरु। तत्र कृषौ गावो भवन्ति। तत्र जाया भवति। तदेव धर्मरहस्य श्रुतिस्मृतिकर्त्ता सविता सर्वस्य प्रेरकोऽयं दृष्टिगोचरोऽर्य ईश्वरो वि चष्टे। विविधमाख्यातवान्।

१४ । हे अक्षाः यूयं मित्र कृणुध्वम् । अस्मासु मैत्रीं कुरुत । खल्विति पूरणः । नोऽस्मान् मृडत । सुखयत च । नोऽस्मान् धृष्णु धृष्णुना । तृतीयार्थे प्रथमा । घोरेण सह्येन माभि चरत । मा गच्छत । किञ्च वो युष्माकं मन्युः क्रोधोऽरातिरस्माकम् शत्रुर्नि विशतां । अस्मच्छत्रुषु तिष्ठतु । अन्योऽस्माकम् शत्रुः कश्चिद्बभ्रूणां बभ्रुवर्णानाम् युष्माकम् प्रसितौ प्रबन्धने नु क्षिप्रमस्तु । भवतु ।

—०—

# PURUṢA X. 90.



सहस्रशीर्षेति षोड़शर्चं षष्ठं सूक्तम्। नारायणो नाम ऋषिः। अन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः। अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः, पुरुषान्न परं किञ्चिदित्यादिश्रुतिषु प्रसिद्धः, स देवता। तथा चानुक्रान्तम्। सहस्रशीर्षा षोड़श नारायणः पौरुषमानुष्टुभं त्रिष्टुवन्त्वित्विति। गतो विनियोगः।

१। सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा। सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्। एवं सहस्राक्षित्वं सहस्रपादत्वं च। स पुरुषो भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशाङ्गुलं दशाङ्गुलपरिमितं देशमत्यतिष्ठत् अभिक्रम्य व्यव-

स्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः।

२। यदिदं वर्त्तमानं जगत्तत्सर्वं पुरुष एव। यच्च भूतमतीतं जगद्यच्च भव्यं भविष्यज्जगत्तदपि पुरुष एव। यथास्मिन् कल्पे वर्त्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उत अपि च अमृतत्वस्य देवत्वस्यायमीशानः स्वामी। यद्यस्मात्कारणादन्नेन प्राणिनां भोग्येनान्नेन निमित्तभूतेनातिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमाना जगदवस्था प्राप्नोति तस्मात्प्राणिनां कर्म्मफलभोगाय जगदवस्थास्वीकारान्नेदन्तस्य वस्तुत्वमित्यर्थः।

३। अतीतानागतवर्त्तमानरूपं जगद्यावदस्ति एतावान् सर्वोऽप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु पूरुषः अतो महिम्नोऽपि ज्यायान् अतिशयेनाधिकः। एतच्चोभयं स्पष्टीक्रियते। अस्य पुरुषस्य। विश्वा सर्वाणि भूतानि कालत्रयवर्त्तीनि प्राणिजातानि पादः चतुर्थोंऽशः। अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सद्दिवि द्योतनात्मके स्वप्रकाशस्वरूपे। व्यवतिष्ठत इति शेषः। यद्यपि सत्यं ज्ञानमनन्तं ब्रह्मेत्याम्नातस्य परब्रह्मण इयत्ताभावात्पाद-

चतुष्टयं निरूपयितुमशक्य तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ।

४ । योऽय त्रिपात्पुरुष ससाररहितो ब्रह्मस्वरूपः सोऽयमूर्ध्व उदैत् । अस्मादज्ञानकार्यात्ससाराद्बहिर्भूतः अत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान् । तस्यास्य सोऽयं पादो लेशः सोऽयमिह मायाया पुनरभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । अस्य सर्वस्य जगतः परमात्मलेशत्व भगवताप्युक्तम्, विष्टभ्याहमिद कृत्स्नमेकांशेन स्थितो जगदिति । ततो मायायामागत्यानन्तरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् । किं कृत्वा । साशनानशने अभि अभिलक्ष्य । साशनं भोजनादिव्यवहारोपेत चेतन प्राणिजातम् । अनशन तद्रहितमचेतनं गिरिनद्यादिकम् । तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ।

५ । विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्चयते । तस्मादादिपुरुषाद्विराड् ब्रह्माण्डदेहोऽजायत उत्पन्नः । विविधानि राजन्ते [illegible] विराट् । विराजोऽधि विराड्देहस्योपरि तमेव दे[illegible] [illegible]करणं कृत्वा पूरुषस्तद्देहाभिमानी कश्चित् पुमानजायत । सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव स्वकीयमायया विराड्देह ब्रह्माण्डरूपं सृष्ट्वा

तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। एतच्चाथर्वणिका उत्तरतापनीये विस्पष्ट-मामनन्ति। स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययेति। स जातो विराट् पुरुषोऽत्यरिच्यत अतिरिक्तो-ऽभूत्। विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चाद्देवादिजीवभावादूर्ध्वं भूमिम् ससर्जेति शेषः। अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज। पूर्यन्ते सप्तभि-र्धातुभिरिति पुरः शरीराणि।

६। यद्यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासम्भवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वत अन्वतिष्ठन्। तदानीमस्य यज्ञस्य वसन्तो वसन्तर्तुरेवाज्यमासीत्। तमेवाज्यत्वेन संकल्पित-वन्त इत्यर्थः। एवं ग्रीष्म इध्म आसीत्। तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः। तथा शरद्धविरासीत्। तामेव पुरोडाशादिहविष्ट्वेन संकल्पितवन्त इत्यर्थः। पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः। अनन्तरं वसन्तादीनामाज्या-दिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम्।

७। यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे

बद्ध वर्हिषि मानसे यज्ञे प्रौचन प्रोक्षितवन्तः। कीदृश-मित्यत्राह। अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तम् तस्माद्विराड़जायत विराजो अधि पुरुष इति। तेन पुरुषरूपेण पशुना देवा अयजन्त। मानसं यागं निष्पादितवन्त इत्यर्थः। के ते देवा इत्यत्राह। साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूला ऋषयो मन्त्रद्रष्टारश्च ये सन्ति ते सर्वेऽप्ययजन्तेत्यर्थः।

८। सर्वहुतः। सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत्। तादृशात्तस्मात्पूर्वोक्तान्मानसाद्यज्ञात्पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं सम्पादितम्। दधि चाज्यं चेत्येवमादि भोग्यजातं सर्वं सम्पादितमित्यर्थः। तथा वायव्यान् वायुदेवताकांल्लोकप्रसिद्धानारण्यान् पशूंश्चक्रे उत्पादितवान्। आरण्या हरिणादयः। तथा ये च ग्राम्या गवाश्वादयस्तानपि चक्रे। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्व यजुर्ब्राह्मणे समाम्नायते। वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः वायव एवैनान् परिदधातीति।

९। सर्वहुतस्तस्मात् पूर्वोक्ताद्यज्ञादृचः सामानि जज्ञिरे उत्पन्नाः। तस्माद्यज्ञाच्छन्दांसि गायत्र्यादीनि जज्ञिरे। तस्माद्यज्ञाद्यजुरप्यजायत।

१०। तस्मात् पूर्वोक्ताद्यज्ञादश्वा अजायन्त उत्पन्नाः। तथा ये के चाश्वव्यतिरिक्ता गर्दभा अश्वतराश्चोभयादत ऊर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त। तथा तस्माद्यज्ञाद्गावश्च जज्ञिरे। किं च। तस्माद्यज्ञादजावयश्च जाताः।

११। प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवा यद्यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तस्तदानीं कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किमासीत्। कौ बाहू अभूताम्। कावूरू। कौ च पादावुच्येते। प्रथमं सामान्यरूपः प्रश्नः पश्चान्मुखं किमित्यादिना विशेषविषयाः प्रश्नाः।

१२। इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति। अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषो मुखमासीत्। मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिमान् पुरुषः स बाहू कृतः बाहुत्वेन निष्पादितः। बाहुभ्यामुत्पादित इत्यर्थः। तत्तदानीमस्य प्रजापतेर्यदूरू तद्रूपो वैश्यः सम्पन्नः। ऊरुभ्यामुत्पन्न इत्यर्थः। तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषोऽजायत। इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां

सप्तमकाण्डे, स मुखतस्त्रिवृतं निरमिमीतेत्यादौ विस्पष्टमाम्नाता ते स ७।१।१।४। अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये।

१३। यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। प्रजापतेर्मनसः सकाशा च्चन्द्रमा जातः। चक्षोश्च चक्षुषः सूर्य्योऽप्यजायत। अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ। अस्य प्राणाद्वायुरजायत।

१४। यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्योऽकल्पयन् तथान्तरिक्षादीँल्लोकान् प्रजापतेर्नाभ्यादिभ्यो देवा अकल्पयन् उत्पादितवन्तः। एतदेव दर्शयति। नाभ्याः प्रजापतेर्नाभिरन्तरिक्षमासीत्। शीर्ष्णः शिरसो द्यौः समवर्त्तत उत्पन्ना। अस्य पद्भ्या पादाभ्यां भूमिरुत्पन्ना। अस्य श्रोत्राद्दिश उत्पन्नाः।

१५। अस्य साङ्कल्पिकयज्ञस्य गायत्र्यादीनि सप्तच्छन्दांसि परिधय आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधयः उत्तरवेदिकास्त्रयः आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः। अतएवाम्नायते। न पुरस्तात् परिदध्यादित्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्तीति। तत एत आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः। तथा

समिधस्त्रिः सप्त त्रिगुणीकृतसप्तसंख्याका एकविंशतिः कृता. । द्वादश मासाः पञ्चर्तव त्रय इमे लोका असावादित्य एकविंश इति श्रुताः पदार्था एकविंशतिदारुयुक्तेन्धनत्वेन भाविताः । यद्य पुरुषा वैराजोऽस्ति तं पुरुष देवाः प्रजापतिप्राणेन्द्रिय-रूपा यज्ञं तन्वाना मानस यज्ञं तन्वानाः कुर्वाणाः पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वत्र, यत्पुरुषेण हविषेत्युक्तम् ।

१६ । पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति । देवा' प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन सकल्पेन यज्ञं यथोक्तयज्ञस्वरूप प्रजापतिमयजन्त पूजितवन्तः । तस्मात् पूजनात्तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणा धारकाणि प्रथमानि मुख्यान्यासन् । एतावता सृष्टिप्रतिपादकसूक्त-भागार्थः सगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपास्तिसाधका देवाः सन्ति तिष्ठन्ति तन्नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानस्तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ।

—※—

# RĀTRI X. 127.

रात्रीत्यष्टर्चं पञ्चदशं सूक्तं सोभरिपुत्रस्य कुशिकस्यार्षम्। यद्वा भरद्वाजस्य सुता रात्र्याख्यास्य सूक्तस्यर्षिका। गायत्रं रात्रिदेवताकम्। तथा चानुक्रान्तम्। रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रमिति। दुःस्वप्नदर्शन उपोषितेन कर्त्रा पायसेन होतव्यं। तत्रैतत् सूक्तं करणत्वेन विनियुक्तं। तथा चारण्यके श्रूयते। स यद्येतेषां किञ्चित् पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा। ऐ॰ आ॰ ३।२।४ इति।

१। आयत्यागच्छन्ती। आङ्पूर्वादेतेः शतर्यदादित्वाच्छपो लुक्। इणो यणिति यणादेशः। उगितश्चेति ङीप्। शतुरनुम इति नद्या उदात्तत्वम्। अक्षभिरक्षिस्थानीयैः प्रकाशमानैर्नक्षत्रैः। छन्दस्यपि दृश्यत इत्यक्षि-

शब्दस्यानङादेशः । यद्वा । अक्षभिरञ्जकैस्तेजोभिः । पुरुत्रा बहुषु देशेषु देवी देवनशीला । देवमनुष्यपुरुषपुरुमर्त्येभ्य इत्यादिना पुरुषशब्दात् सप्तम्यर्थे त्राप्रत्ययः । रात्रीयं रात्रिदेवता व्यख्यत् । विचष्टे । विशेषेण पश्यति । रात्रेश्चाजसाविति ङीप् । ख्यातेश्छान्दसे लुङ्यस्यतिवक्तीत्यादिना च्लेरङादेशः । अपि चैषा विश्वाः सर्वाः श्रियः शोभा अध्यधित । अधिधारयति । दधातेर्लुङि स्थाघ्वोरिच्चेतीत्त्वम् । सिचः कित्त्वम् । ह्रस्वादङ्गादिति सिचो लोप ।

२ । अमर्त्या मरणरहिता देवी देवनशीला रात्रिरुरु विस्तीर्णमन्तरिक्षमाप्राः । प्रथमतस्तमसापूरयति । प्रा पूरणे आदादिकः । लङि व्यत्ययेन मध्यमः । तथा निवतो नीचीनाल्लँतागुल्मादीनुद्वत उच्छ्रितान्वृक्षादींश्च स्वकीयेन तेजसाप्नोति । तदनन्तरम् तत्तमोऽन्धकारम् ज्योतिषा ग्रहनक्षत्रादिरूपेण तेजसा बाधते पीडयति ।

३ । आयत्यागच्छन्ती देवी देवनशीला रात्रिः स्वसारम् भगिनीमुषसं निरकृत निष्करोति । प्रकाशेन संस्करोति । निवर्त्तयतीत्यर्थः । तस्यामुषसि जातायां नैशं तमोऽपेद्धासते । अपैव गच्छति । ओहाङ् गतौ । लेट्यडागमः । सिब्बहुलमिति सिप् ।

४ । अद्यास्मिन्काले नोऽस्माकम् सा रात्रिदेवता प्रसीदतु

यस्या रात्र्यां यामन्यामनि प्राप्तौ सत्या वयम् न्यविक्ष्महि। निविशामहे सुखेन गृह आस्महे विशेर्लङि नेर्विशः। पा० ७।३।७३ इत्यात्मनेपदम्। छान्दसः शपो लुक्। तत्र दृष्टान्तः। वयः पक्षिणो वृक्षे न यथा वृक्षे नीडाश्रये वसति रात्रौ निवास कुर्वन्ति तथा निवसाम इत्यर्थः।

५। ग्रामासो ग्रामाः। अत्र ग्रामशब्दो जनसमूहे वर्त्तते। यथा ग्राम आगत इति। सर्वे जना न्यविक्षत। तस्या रात्रावागताया निविशन्ते। शेरते। निपूर्वाद्विशते-श्छान्दसे लुङि पूर्ववदात्मनेपदं। शल इगुपधादनिटः क्सः। क्सस्याचि पा० ३।७।७२। इत्यकारलोपः। तथा पद्वन्तः पादयुक्ता गवाश्वादयश्च निविशन्ते। तथा पक्षिणः पक्षोपेताश्च निविशन्ते। अर्थिनः। अर्तेरर्थो गमनं। शीघ्रगमनयुक्ताः श्येनासश्चिच्छ्येना अपि तस्या रात्र्यां निविशन्ते। एषा रात्रिः सर्वाणि भूतजातान्यहनि सञ्चारेण श्रान्तानि स्वयमागत्य सुखयतीत्यर्थः।

६। हे ऊर्म्ये। रात्रिनामैतत्। रात्रे। वृक्य वृकस्य स्त्रियं वृक चास्मान् हिंसन्तं यवय। अस्मत्तः पृथक्कुरु। अस्मान्बाधितुं यथा न प्राप्नोति तथा। स्तेन तस्करं च यवय। अस्मत्तो वियोजय। अथानन्तरम् नोऽस्माकं सुतरा सुखेन तरणीया क्षेमकरी भव।

७। पेपिशत्पेशम् पिंशत् सर्ववस्तुष्वाश्लिष्टं तमोऽन्धकारं कृष्णं कृष्णवर्णं व्यक्तं विशेषेण स्वभासा सर्वस्याञ्जकं स्पष्टरूपं वा ईदृशं नैशं तमो मामुपास्थित। उपागच्छत्। सङ्गतिकरण आत्मनेपदम्। हे उष उषोदेवते त्वमृणेवर्णानीव तत्तमो यातय। अपगमय। स्तोतृणामृणानि यथा धनप्रदानेनापाकरोषि तथा तमोऽप्यपसारयेत्यर्थः।

हे रात्रि रात्रिदेवते ते त्वां गा इव पयसो दोग्ध्रीर्धेनुरिवोपेत्याकरम्। स्तुतिभिरभिमुखीकरोमि। करोतेश्छान्दसे लुङि कृमृदृरुहिभ्य इति च्लेरङादेशः। दिवो दुहितर्द्योतमानस्य सूर्यस्य पुत्रि यद्वा दिवसस्य तनये। परमपि च्छन्दसि। पा० २।१।२।६। इति परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावात् पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वम्। त्वत्प्रसादाज्जिग्युषे शत्रूञ्जिग्युषो मम स्तोमं न स्तोत्रमिव हविरपि वृणीष्व। त्वं भजस्व। जयतेर्लिटः क्वसुः। सन्लिटोर्जेरित्यभ्यासादुत्तरस्य जकारस्य कुत्वं। षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी। वसोः सम्प्रसारणमिति सम्प्रसारणम्।

—०—

# HYMN OF CREATION X. 129.

एकादशेऽनुवाके त्रयोविंशतिसंख्यानि सूक्तानि। तत्र नासदासीदिति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभं। परमेष्ठी नाम प्रजापतिर्ऋषिः। वियदादिभावानां सृष्टिस्थितिप्रलयादीनामत्र प्रतिपाद्यत्वात्तेषां कर्त्ता परमात्मा देवता। तथा चानुक्रान्तम्। नासत् सप्त प्रजापतिः परमेष्ठी भाववृत्तं त्विति। गतो विनियोगः।

१। तपसस्तन्महिनाजायतैकमित्यादिनाग्रे सृष्टिः प्रतिपादयिष्यते। अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणम् तदसच्छशविषाणवन्निरुपाख्यं नासीत्। न हि तादृशात् कारणादस्य सतो जगत उत्पत्तिः सम्भवति। तथा नो सन्नैव सदात्मवत्सत्त्वेन निर्वाच्यमासीत्। यद्यपि सदसदात्मकम् प्रत्येकं विलक्षणम् भवति तथापि भावाभावयोः सहावस्थानमपि

सम्भवति। कुतस्तयोस्तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः। तर्ह्यात्मनोऽप्यनिर्वाच्यत्वप्रसङ्गः। अथोच्येत। न। आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान् मायाया एवात्र सत्त्व निषिध्यत इति। एवमपि तदानीमिति विशेषणानर्थक्य व्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात्। अथ व्यावहारिकसत्ता पृथिव्यादीनाम् भावानाम् विद्यमानत्वात् कथं नो सदिति निषेधः। तत्राह। नासीद्रज इत्यादि। लोका रजांस्युच्यन्ते। नि० ४।१९। इति यास्कः। अत्र च सामान्यापेक्षमेकवचनम्। व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः। तथा व्योमान्तरिक्षं तदपि नो नैवासीत्। पर इति सकारान्तम् परस्तादित्यर्थे वर्त्तते। परशब्दाच्छान्दसोऽस्तातेरर्थेऽसिप्रत्ययः। परो व्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृति सत्यलोकान्त यदस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेश तदावरणनिमित्त चाक्षेपमुखेन क्रमेण निषेधयति किमावरीवरिति। किमावरणीयं तत्त्वमावरकभूतजातमावरीवः। अत्यन्तमावृणुयात्। आवार्यं-

भावात्तदावरकमपि नासीदित्यर्थः। वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत्। यद्वा। किमिति प्रश्नमेव। किं तत्त्वमावरकमावृणुयात्। आवार्याभावादावृणियमाणवत्तदपि स्वरूपेण नासीदित्यर्थः। आवृणवत्तत्त्वं कुह कुत्र देशेऽवस्थायावृणोति। आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः। किंशब्दात् सप्तम्यर्थे ह्प्रत्ययः। कु तिहोः ७।२।१०४। इति प्रकृतेः क्वादेशः। कस्य शर्मन् कस्य वा भोक्तुर्जीवस्य शर्मणि सुखदुःखसाक्षात्कारलक्षणे वा निमित्तभूते सति तदावरकम् तत्त्वमावृणुयात्। जीवानामुपभोगार्था हि सृष्टिः। तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणम् प्रलयदशाया च भोक्तारो जीवा उपाधिविलयात् प्रलीना इति कस्य कश्चिदपि भोक्ता न सम्भवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपञ्चवद्भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति। किं-शब्दादुत्तरस्य ङसः सावेकाच इति प्राप्तस्योदात्तत्वस्य न गोश्वन्साववर्णेति प्रतिषेधः। सुपां सुलुगिति शर्मणः सप्तम्या लुक्। [illegible] मावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्तत्त्व [illegible] निराकृतं तथाप्यापो वा इदमग्रे सलिलमासीत् [illegible] १० ७।१।५।७। इत्यादिश्रुत्या कश्चिदपां सद्भावमाशङ्केत। तं प्रत्याचष्टे अम्भः किमासीदिति। गहनं

दुष्प्रवेशं गभीरम् दुःखस्थानमत्यगाध इदमम्भः किमासीत् । तदपि नैवासीदित्यर्थः श्रुतिस्त्ववान्तरप्रलयविषया ।

२ । ननूक्तस्य प्रतिसंहारस्य सहर्त्रपेक्षत्वात् स एव संहर्त्ता, मृत्युर्विद्यत इत्यत आह । न मृत्युरासीदिति । ननु यदि स नासीत् तर्हि तदभावकृतममृतममरणम् प्राणिनामवस्थानम् तदानीमपि स्यात् तत्राह । अमृतं न तर्हीति । तर्हि तस्मिन् प्रतिहारसमये । अयं भावः । सर्वेषा प्राणिनाम् परिपक्वम् भोगहेतुभूतम् सर्वं कर्म यदोपभुक्तमासीत् तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि सञ्जिहीर्षा जायते । तथैव स मृत्युः सर्वं जगत् संहरत इति किमनेन मृत्युना संहर्त्रा तदभावकृतम् वा कथममरणम् स्यादिति । एतदेवाभिप्रेत्य कठैराम्नायते । यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनम् । मृत्युर्यस्योपसेचनम् क इत्था वेद यत्र सः । क० उ० २।२५ । इति । नन्वेतस्य सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह । न रात्र्या इति । न रात्र्या अह्नश्च प्रकेतः प्रज्ञानमासीत् । तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात् । एतेनाहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः । कथं तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः । उपचारादिति ब्रूमः । यथेदानी-

त्तननिषेधस्य कालोऽवच्छेदकस्तथा मायापि तदवच्छेद-हेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची प्रत्यय । यदवादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वच्यत इति तदिदानीम् दर्शयत्यानीदिति । तत्सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वमानीत् । प्राणितवत् । नन्वेवं प्राणनकर्त्तुर्जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवच्चितस्य निरुपाधिकस्य ब्रह्मणः । अप्राणो ह्यमनाः शुद्ध इति तस्य प्राणसम्बन्धाभावात् तत्राहानीद-वातमिति । अयमाशय. । आनीदित्यत्र धात्वर्थक्रिया तत्-कर्त्ता तस्य च भूतकालसम्बन्ध इति त्रयोऽर्थाः प्रतीयन्ते । तत्र समुदायो न विधीयते यथाग्नेयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात् । किं तर्ह्यनेन कर्त्तृत्वमनूद्य भूतकाल-सत्तालक्षणो गुणो विधीयते दध्ना जुहोतीति वाक्यान्तर-विहिताग्निहोत्रानुवादेन तत्र गुणविधानम् । तत्राप्यनेन कर्त्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधानुप-पत्तिप्रसङ्गात् । अतोऽनेन कर्त्तृत्वेनेदानीन्तनेनोपलक्षितम् यन्निरुपाधिकम् परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति । नन्वीदृशस्य ब्रह्मणो मायया सह सम्बन्धासम्भवात् साङ्ख्याभिमता स्वतन्त्रा सद्रूपा सत्त्व-रजस्तमोगुणात्मिका मूलप्रकृतिरेवाभिमतेति कथं नो सदिति निषेधः । तत्राह स्वधयेति । स्वस्मिन् धीयते ध्रियत

आश्रित्य वर्तत इति स्वधा माया । तया तद्ब्रह्मैकमविभागापन्नमासीत् । सहयुक्तेऽप्रधाने । पा० २।३।१९ । इति तृतीया सहशब्दयोगाभावेऽपि सहार्थयोगे भवति वृद्धो यूना । पा० १।२।६५ । इति निपातनाल्लिङ्गात् । अत्र प्रकृतिप्रत्ययाभ्याम् तस्याः स्वातन्त्र्यं निवार्यते । यद्यप्यसङ्गस्य ब्रह्मणस्तया सह सम्बन्धो न सम्भवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव सम्बन्धोऽप्यध्यस्यते यथा शुक्तिकायां रजतस्य । एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम् । ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वाद्ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं तस्य सत्त्वमुक्तमानीदवातमिति । ब्रह्मणो वा सत्त्वात्तस्या अपि सत्त्वप्रसङ्ग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः । मैवम् । अयुक्तिद्वयैक्यावभासेऽपि युक्त्या विविच्य मायांशस्यानिर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम् । ननु द्वन्द्वृश्याविति द्वावेव पदार्थावानीदवातं स्वधयेति तौ चेदङ्गीक्रियते तत् किमपरमवशिष्यते यन्नासोद्रज इत्यादिना प्रतिषिध्येत तत्राह तस्मादिति । तस्माद्ध तस्मात् खलु पूर्वोक्तान्मायासहिताद्ब्रह्मणोऽन्यत् किं च न किमपि वस्तु भूतभौतिकात्मकं जगन्नास । न बभूव । छन्दस्युभयथेति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः । ननु तदानीमन्यस्य सत्त्वनिषेधे न शङ्काः ।

असत्त्वे चाप्रसक्तान्न निषेधोपयोग इत्यत आह पर इति। परः परस्तात् सृष्टेरूर्ध्वं वर्त्तमानमिद जगत्तदानीं न बभूवेत्यर्थ। अन्यथोक्तरीत्या क्वचिदपि निषेधो न स्यादिति भावः।

३। ननूक्तप्रकारेण यदि पूर्वमिद जगन्नासीत् कथ तर्हि तस्य जन्म। जायमानस्य जनिक्रियाया कर्त्तृत्वेन कारकत्वात् कारक च कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्त्तित्वस्यावश्यम्भावात्। अपैतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि सद्विद्यत इत्युच्यते। कथं तस्य जन्म। अत आह। तमसा गूढमग्र इति। अग्रे सृष्टेः प्राक् प्रलयदशायाम भूतभौतिकम सर्वं जगत्तमसा गूढम्। यथा नैश तमः सर्वपदार्थजातमावृणोति तद्वत्। आत्मतत्त्वस्यावरकत्वान्मायापरसञ्ज्ञ भावरूपाज्ञानमत्र तम इत्युच्यते। तेन तमसा निगूढम् संवृतम् कारणभूतेन तेनाच्छादितम् भवति। आच्छादकात्तस्मात्तमसो नामरूपाभ्यां यदाविर्भवत तदेव तस्य जन्मेत्युच्यते। एतेन कारणावस्थायामसदेव कार्य्यमुत्पद्यत इत्यसद्वादिनोऽसत्कार्य्यवादिनो ये मन्यन्ते ते प्रत्याख्याता। ननु कारणे तमसि तज्जगदात्मकं कार्य्यं विद्यते चेत् कथं नासीद्रज इत्यादिनिषेध। तत्राह तम आसीदिति। तमोभावरूपाज्ञान मूलकारणम्। तद्रूपता तदात्मनाम्। यतः सर्वं जगत्प्राक तम आसीदतो

निधिष्यत इत्यर्थः। नन्वावरकत्वादावरकम् तमः कर्तृ. आवार्य्यत्वाज्जगत्कर्म। कथ तयोः कर्मकर्त्रोस्तादात्म्यम्। तत्राह। अप्रकेतमिति। अप्रकेतमप्रज्ञायमानम्। अयमर्थः। यद्यपि जगतस्तमसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्या दशायां नामरूपाभ्या विस्पष्ट न ज्ञायत इति तादात्म्यवर्णनम्। अतएव मनुना स्मर्यते। आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्य-मनिर्देश्यं प्रसुप्तमिव सर्वतः। मनुः १।५। इति। कुतो वा न प्रज्ञायते तत्राह। सलिलम्। सल गतौ। औणादिक इलच्। इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन सङ्गत-मविभागापन्नमाः। आसीत्। अस्तेर्लङि तिपि बहुल छन्दसीतीडभावे हल्ङ्याब्भ्य इति तिलोपे तिप्यनस्ते.। पा० ८।२।७३। इति पर्य्युदासादृकाराभावः। यद्वा सलिल-मिति लुप्तोपमम्। सलिलमिव। यथा क्षीरेणाविभागापन्न नीर दुर्विज्ञानं तथा तमसाविभागापन्न जगन्न शक्यविज्ञान-मित्यर्थः। ननु विविधविचित्ररूपभूयसः प्रपञ्चस्य कथमति-तुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः। तथा तमोऽपि क्षीरवद्बलवदित्येवोच्यते। तर्हि दुर्बलस्य जगतः सर्गसमये-ऽपि नोद्भवसम्भव इत्यत आह। तुच्छ्येनेति। आ समन्ता-द्भवतीत्याभु तुच्छ्येन। छान्दसो यकारोपजनः। तुच्छेन

तुच्छकल्पनेन मदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं छादितमासीत्। दधातेः कर्मणि निष्ठा। दधातेर्हिः। गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्। एकमेकीभूत कारणेन तमसाविभागता प्राप्तमपि तत्कार्य्यजात तपसः स्रष्टव्यपर्य्यालोचनरूपस्य महिना माहात्म्येनाजायत। उत्पन्नम्। तपसः स्रष्टव्यपर्य्यालोचनरूपत्व चान्यत्राम्नायते। यः सर्वज्ञः सर्वविद्यस्य ज्ञानमय तपः। मु० उ० १।१।९। इति।

४। ननूक्तरीत्या यदीश्वरस्य पर्य्यालोचन जगतः पुनरुत्पत्तौ कारण तदेव किन्निबन्धनमित्यत आह कामस्तदग्र इति अग्रेऽस्य विकारजातस्य सृष्टेः प्रागवस्थायाम् परमेश्वरस्य मनसि कामः समवर्त्तत। सम्यगजायत। सिसृक्षा जातेत्यर्थ। ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह मनस इति। मनसोऽन्तःकरणस्य सम्बन्धि वासनाभिधेण मायायां विलीनेऽन्तःकरणे समवेत। सामान्यापेक्षमेकवचनम्। सर्व्वप्राण्यन्तःकरणेषु समवेतमित्यर्थ। एतेनात्मनो गुणाधारत्वम् प्रत्याख्यातम्। तद्दृशं रेतो भाविन प्रपञ्चस्य बीजभूत प्रथममतीते कल्पे प्राणिभिः कृत पुण्यात्मकं कर्म्म यद्यतः कारणात् सृष्टिसमय आसीत् अभवत्। भूष्णु वर्धिष्णुजायत परिपक्वं सत् फलोन्मुखमासीदित्यर्थः। तत्ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य

विततो विस्तृत आसीत् । स्विदासीदिति वक्ष्यमाणमत्रापि सम्बध्यते । विचार्यमाणानाम् । पा० ८।२।९७। इति प्लुतः । तत्रोदात्त इत्यनुवृत्तेः स चोदात्तः । स्विदिति वितर्के । स कार्यवर्गः प्रथमतः किं तिरश्चीनस्तिर्यगवस्थितो मध्ये स्थित आसीत् किंवाधोऽधस्तादासीत् । आहो स्विदुपर्युपरिष्टात् किमासीत् । उपरि स्विदासीदिति च । पा० ८।२।१०२ । इत्यनुदात्तः प्लुतः । आत्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निः । तै० आ० ८।१ । इत्यादिकया पञ्चमीश्रुत्या तत उद्गातारम् ततो होतारमितिवत्क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्गस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते । एवं नाम शीघ्रं सर्वतो दिक्षु सर्गो निष्पन्न इत्यर्थः । एतदेव विभजते सृष्टेषु कार्येषु मध्ये केचिद्भावा रेतोधा रेतसो बीजभूतस्य कर्मणो विधातारः कर्त्तारो भोक्तारश्च जीवा आसन् अन्ये भावा महिमानः । स्वार्थिक इमनिच् । महान्तो वियदादयो भोग्या आसन् । एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः । अयमेवार्थः स्तैत्तिरीयके तत् सृष्ट्वा तदेवानुप्राविशत् । तै० आ० ८।६ । इत्यारभ्य प्रतिपाद्यते । तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा ।

अन्ननामैतत् । भोग्यप्रपञ्चोऽवस्तादवरो निकृष्ट आसीत् । प्रयतिः प्रयतिता भोक्ता परस्तात् पर उत्कृष्ट आसीत् । भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवानित्यर्थः । विभाषा परावराभ्याम् । पा० ५।३।२९ । इति प्रथमार्थेऽस्तातिः । अस्ताति च । पा० ५।३।४० । इत्यवरशब्दस्यावादेशः । अवस्तातादिति संहितायामीषाअक्षादित्वात् प्रकृतिभावः ।

६ । एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता । एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद इतिवत् । अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह । को अद्धेति । कः पुरुषोऽद्धा पारमार्थ्येन वेद । जानाति । को वेहास्मिँल्लोके प्र वोचत् । प्रब्रूयात् । इयं दृश्यमाना विसृष्टिर्विविधा भूतभौतिकभोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात् कुतः कस्माच्च निमित्तकारणादाजाता समन्ताज्जाता । प्रादुर्भूता । एतदुभयं सम्यक्को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः । ननु देवा अजानन्तः । सर्वज्ञास्ते ज्ञास्यन्ति वक्तुं च शक्नुवन्तीत्यत आह । अर्वागिति । देवाश्चास्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविधं यद्भौतिकं सर्जनं सृष्टिस्तेनार्वागर्वाचीनाः कृताः । भूतसृष्टेः पश्चाज्जाता इत्यर्थः । तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः ।

अजानन्तो वा कथं प्रब्रूयुः । उक्तं दुर्विज्ञानत्वं निगमयति । अथवं सति देवा अपि न जानन्ति किल । तद्व्यतिरिक्तः को नाम मनुष्यादिर्वेद तज्जगत्कारणम् जानाति यतः कारणात् कृत्स्नं जगदावभूव अजायत ।

७ । उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानम् एवं सृष्ट तज्जगद्दुर्धरमपीत्याह । इयमिति । यत उपादानभूतात् परमात्मन इयं विसृष्टिर्विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिराबभूव आजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति । एवं च को नामान्यो धर्त्तुं शक्नुयात् । यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः । एतेन कार्य्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तम् भवति । तथा च पारमर्षं सूत्रम् । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । वेदा १।४।२३ । इति । यद्वा अनेनार्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव द्रढ़यति । को वेदेत्यनुवर्त्तते । इय विविधा सृष्टिर्यत आबभूव आ समन्तादजायतेति को वेद । न कोऽपि । नास्त्येव जगतो जन्म कदाचिदनीदृश जगदिति बहवो भ्रान्ता भवन्त्यपि । यतः । जनिकर्त्तुः प्रकृतिः । पा० १।४।३० । इत्यपादानसंज्ञायां पञ्चम्यास्तसिल् । यस्मात् परमात्मन उपादानभूतादाबभूव तं परमात्मानं को वेद । न कोऽपि । प्रकृतितः

परमाणुभ्यो वा जगज्जन्मेति हि बहवो भ्रान्ताः । तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्तभूतोऽपि सन् यदि वा दधे विदध इदं जगत् ससर्ज यदि वा न ससर्ज । असन्दिग्धे सन्दिग्धवचनमेतच्छास्त्राणि चेत् प्रमाणं स्युरिति यथा । स एव विदधे । तं को वेद । अजानन्तोऽपि बहवो जड़ात् प्रधानादकर्त्तृकमेवेदं जगत् स्वयमजायतेति विपरीतं प्रतिपन्ना विदधतो विधानमजानन्तोऽपि । स एवोपादान-भूत इत्यपि को वेद । न कोऽपि । उपादानादन्यस्तटस्थ एवेश्वरो विदध इति हि बहवः प्रतिपन्नाः । देवा अपि यन्न जानन्ति तदर्वाचीनानामेषां तत्परिज्ञाने कैव कथेत्यर्थः । यद्येव जगत्सृष्टिरत्यन्तदुरवबोधना तर्हि सा प्रमाणपद्धति-मध्यास्त इत्याशङ्क्य तत्सद्भाव ईश्वरो वेद प्रमाणयति । यो अस्येति । अस्य भूतभौतिकात्मकस्य जगतो योऽध्यक्ष ईश्वरः परम उत्कृष्टे सत्यभूते व्योमन् व्योमन्याकाश आकाश वन्निर्मले स्वप्रकाशे । यद्वा । अवतेस्तर्पणार्थादन्येभ्योऽपि दृश्यन्त इति मनिन् । नेड्वशि कृतीतीट्प्रतिषेधः । ज्वर-त्वरेत्यादिना वकारोपधयोरूट् । सप्तम्या लुक् । न ङि-सम्बुद्ध्योरिति नलोपप्रतिषेधः । व्योमनि विशेषेण तृप्ते । निरतिशयानन्दस्वरूप इत्यर्थः । यद्वा । अवतिर्गत्यर्थः । व्योमनि विशेषेण गन्तव्ये । देशकालवस्तुभिरपरिच्छिन्न

इत्यर्थः। अथवा। अवतिर्ज्ञानार्थः। व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि। ईदृशे स्वात्मनि प्रतिष्ठितः। श्रूयते हि सनत्कुमारनारदयोः संवादे स भगवः कस्मिन् प्रतिष्ठित इति, स्वे महिम्नि। छा० उ० ७।२४।१ इति। ईदृशो यः परमेश्वरः सो अङ्ग। अङ्गेति प्रसिद्धौ। सोऽपि नाम वेद जानाति। यदि वा न वेद न जानाति। को नामान्यो जानीयात्। सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः।

---

## YAMA X. 135.



यस्मिन्निति सप्तर्चं सप्तमं सूक्तं यमगोत्रस्य कुमारस्यार्षम्। आनुष्टुभं यमदेवताकम्। तथा चानुक्रान्तं। यस्मिन् कुमारो यामायनो याममानुष्टुभं त्विति।

१। वृक्षे। लुप्तोपममेतत्। वृक्षवत्सुपलाशे शोभनपलाशोपेते शोभनोद्यानसहिते। यद्वा। शोभनपर्णोपेते वृक्षे। तादृशस्य वृक्षस्य मूलं यथौष्णजनितश्रमापनोदनेन सुखकरं भवति तद्वत्सुखकरे यस्मिन् स्थाने देवैः परिजनभूतैर्यमो नियन्ता वैवस्वतः सम्पिबते सह भुंक्ते। पिबतीत्यर्थः। विश्पतिर्विशां प्रजानामधिपतिः पिता नः। व्यत्ययेन बहुवचनम्। मम नचिकेतसो जनको वाजश्रवसोऽत्रास्मिन्यमस्य स्थाने पुराणान् पुरातनानत्र चिरकालं निवसतः पितॄननु तेषां पश्चात्तत्समीपे निवसत्वयमिति वेनति। मां कामयते। नचिकेता नाम कुमारो वाजश्रवसेन पित्रा यमलोकं प्रस्थापितः सन् यमं दृष्ट्वा प्रसाद्य पुनरपीमं लोकमाज-

गाम। अयमर्थ इदमादिकैर्मन्त्रै: प्रतिपाद्यते। यद्वा। कुमारो नाम नचिकेतसाऽन्य ऋषिदृष्टि। यच्छतीति यम आदित्य:। तमनेन सूक्तेन तुष्टाव। सुपलाशे वृक्ष इव यस्मिन्शोभने यम आदित्यो देवै:। दीव्यन्तीति देवा रश्मय:। तै: सम्पिबते सङ्गच्छते। उपसर्गवशात् पिबतिरत्र गत्यर्थ:। व्यत्ययेनात्मनेपद। अत्रास्मिन् स्थाने स्थितो विश्पतिर्विशां प्रजानाम् प्रकाशनप्रवर्षणादिना पालयिता प्राणात्मना सर्वेषां जनक: स आदित्य: पुराणांश्चिरन्तनान्स्तोतॄन्नोऽस्मानपि वेनति। अनुग्राह्यत्वेन कामयते। यद्वा। अत्र स्थाने स्थितान्नोऽस्माकं पुराणान् पूर्वपुरुषाननुवेनति। अनुक्रमेण कामयते।

२। पुराणान् पुरातनान् पितॄननुवेनन्तं मामनुगतं कामयमानममुयानया पापया निकृष्टया बुद्ध्या सह चरन्तं वर्त्तमानं पितरं वाजश्रवसमसूयन् सुखेन जीवन्तं मां मृत्युसमीपं प्रेहीत्युक्तवानिति मानसेनोपतापेन युक्त: सन् प्रथममभ्यचाकशं। अयं पश्यतिकर्मा। अभ्यपश्यं। असुञ् मानस उपतापे। कण्ड्वादि:। पुन: पश्चात्तस्मा अस्पृहयं। पितुराज्ञया तं मृत्युं प्राप्तुमैच्छं। स्पृह ईप्सायां। चुरादिरदन्त:। स्पृहेरीप्सित:। पा० १।४।३६। इति सम्प्रदानसज्ञायां तच्छब्दाच्चतुर्थी। यद्वा पुराणांश्चिरन्तनान्

स्तोतॄन् पूर्वपुरुषान् पितॄन् वानुर्वनन्तमनुक्रमेण कामयमानं चरन्तमुदयास्तमयाभ्यां दिवि परिवर्त्तमानमनया पापया निकृष्टया स्तोतुमसमर्थया वुद्ध्यासूयन्। गुणेषु दोषाविष्करणमसूया। परकीयगुणेषु दूषणान्याविष्कुर्वन्नभ्यचाकशं। अयमपि कश्चिदिति सामान्यरूपेणाभ्यपश्यं। इदानीं तु पुनस्तस्यादित्यस्य माहात्म्यं जानस्तस्मा अस्पृहयम्। तमेव आदित्यं स्तुतिभिः परिचरणात्मकैः कर्मभिश्च प्राप्तुमैच्छं।

३। नचिकेतःसंज्ञं कुमारं यमोऽनयोत्तरया त्वं प्रलोभयति। हे कुमार नवमभिनवमितः पूर्वमदृष्टं। अभिनवत्वमेव व्यनक्ति। अचक्रं चक्ररहितम् तमेकेषमेकेषा यस्य तादृशं तथापि विश्वतः सर्वतः प्राञ्चं प्रकर्षेणाञ्चन्तं गच्छन्तं यं रथं मनसाकृणोर्मत्समीप प्रतिगमनायाध्यवसायात्मकमीदृशं य रथमकरोः कृत्वा चापश्यन् कर्त्तव्याकर्त्तव्यविभागमजानन्नधि तिष्ठसि। रथमारोहसि। यद्वा स्तोतारम् कुमाराख्यमृषिमादित्यः प्रत्यक्षः सन् देहात्मनोर्विवेकम् वोधयति। हे कुमारर्षे चक्ररहितमेकेषं। एकः प्राण ईषास्थानीयो यस्य। ईदृशमभिनवं सर्वतो गच्छन्तं शरीरात्मकं यं रथं मनसान्तःकरणेनाकृणोः अकरोः। सङ्कल्पात्मकेन मनसा हि कामो जायते। सत्यां हि कामनायां

पुण्यापुण्यात्मकं कर्म क्रियते। तेन च भोगप्रदानायेदं शरीरमारभ्यत इति परम्परया मनस. शरीरनिष्पादकत्वम्। तं शरीरात्मकं रथमपश्यन्नजानन्। लक्षणहेत्वोः। पा० ३।२।१२६। इति हेतौ शतृप्रत्ययः। मत्स्वरूपापरिज्ञानाद्धेतोरधितिष्ठसि। भोगायतनत्वेन स्वीकरोषि।

४। हे कुमार नचिकेतः यं पूर्वोक्तमधिष्ठितं रथं प्रावर्त्तयः मत्समीपं प्रत्यगमयो विप्रेभ्यो मेधाविभ्यः पर्य्युपरि-भूलोके वर्त्तमानानां मेधाविना बान्धवानामुपरिष्टात्। अन्तरिक्ष इत्यर्थः। पञ्चम्याः परावध्यर्थ इति विसर्जनीयस्य सत्व। तं रथं साम पित्रा क्रुत सान्त्वन यमसमीप गत्वैव-मेव त्वया वक्तव्यमिति प्रत्यागमनकारणमुपायोपदेशनमनु प्रावर्त्तत। इतोऽस्माल्लोकादन्वगच्छत्। कथम्भूतम्। नावि नौवत्तरणसाधनाया बुद्धौ समाहितम्।

सम्यग्धृतम्। यद्वा। हे कुमारर्षे यं शरीरात्मकं रथ-मधिष्ठितं प्रावर्त्तय. ससारे प्रवर्त्तितवानसि मेधाविनां मध्ये तं रथमनु साम। उपलक्षणमेतत्। ऋक्सामादिसाध्य स्तोत्रं नावि नौवत्तारयित्र्यां वाचि वेदात्मिकायां समाहितं सम्यक् प्रतिपाद्यत्वेन हितं कर्म चेतोऽस्माल्लोकात् प्रावर्त्तत। प्रवृत्तमभूत्। इत्यमात्मस्वरूपापरिज्ञानेन शरीरबन्धन तेन कर्त्तव्यं व्यवहारजातम् चोक्तम्। अथ तु सत्यज्ञानादि-

स्वरूपमकर्त्तारं परमात्मानं यदि स्वात्मतया साक्षात् करोति तदोक्त न सम्भवतीत्यभिप्राय: ।

५ । क: पुरुष: इमं कुमारमजनयत् । अधिक्षेपे किंशब्द: । ईदृशं बालं यमसमीपं प्रहिण्वन् कथ पिता समीचीन: स्यात् । तत्तावदास्ताम् । को वा पुरुषोऽस्य बालस्य यमसमीप प्रतिगमनाय तं रथं निरवर्त्तयत् । निवर्त्तितवान् । सोऽपि मूर्ख इत्यर्थ: । यथा तेन प्रकारेणायं कुमारोऽनुदेय्यनुदातव्योऽभवत् भवति तत्तदनुगुण वचनमुपायकथनमद्यास्मिन् काले नोऽस्माकं क: स्वित् को नाम ब्रूयात् । अभिदध्यात् । प्रथम यमसमीपं गत्वा पश्चात्ततो निर्गमनोपाय ब्रूवन्नपि न प्राज्ञ इत्यर्थ: । अथवा कुमाराख्य ऋषिरात्मन: सर्वात्म्यमवगच्छन् स्वव्यतिरिक्तस्यान्यस्यासम्भवं किंशब्देनाक्षेपवाचिना दर्शयति । कुमारं मां क. पिताजनयत् । न कोऽपि । अजो नित्य: शाश्वत । क० उ० २।१८ । इति श्रुत्युक्तरूपोऽहं भवामि । कश्च शरीरात्मक रथं निरवर्त्तयत् । निर्वर्त्तयति । मद्व्यतिरिक्तस्य निर्वर्त्तयितुरभावात् तथा निर्वर्त्यस्यान्यस्यासम्भवाच्च । अद्यास्मिन् काले सर्वात्म्यानुभवदशाया त त प्रकार क. स्वित्को नाम नोऽस्माकं ब्रूयात् यथा येन प्रकारेणानुदेय्यनुदातव्या मद्व्यतिरिक्तान्यपदार्थसत्ताभवत् भवति । स प्रकारोऽपि दुर्वचन इत्यर्थ: ।

६। अनुदेय्यनुदातव्यो यथा येन प्रकारेण पितरमनु-लक्ष्यायं कुमारो यमेन दत्तोऽभवत् भवति तथा ततस्तस्मा-द्वाजश्रवसात् पितुरग्रं यमसमीपं गच्छेति वचनस्याग्रतो वर्त्तमानं नचिकेतसा यमेन सह वदितव्यं तं वै प्रवसन्तं गन्तासीति होवाचेत्यादिकम्। तै० ब्रा० ३।११।८।२। ब्राह्मणान्तरोक्तमजायत। प्रादुरभवत्। पितोपदिष्टवानि-त्यर्थः। पुरस्तात्तत: पूर्वं बुध्न उक्तस्याग्रस्य मूलभूतं यमस्य गृहं प्रतिगच्छेति वचनमाततः। अतिविस्तृतमासीत्। अतस्तदशक्यपरिहारमिति पश्चात् क्रोधं परित्यज्य निरयणं तस्माद्यमान्निर्गमनोपायं कृतम्। पित्राचरितम्। यद्वा। अनुदेय्यात्मानमनु दातव्यात्मस्वरूपव्यतिरिक्तान्यपदार्थसत्ता यथाभवत् भवति तदनुगुणं ततस्तस्मान्मायाविशिष्टादात्मनो-ऽग्रं स्रष्टव्यस्य विकारजातस्याद्यं मनस्तत्त्वं सिसृक्षाकारण-मजायत। उदपद्यत। पुरस्तात् सृष्टेः प्रागवस्थायाम् बुध्नो मूलमव्याकृतम् मायात्मकं कारणमेवाततः। आ समन्ता-त्तत विस्तृतमासीत्। पश्चात्तमस उत्पत्त्यनन्तरं निरयणं तद्गतानां कार्य्याणाम् तस्मात्कारणान्निर्गमनम् घटपटादि-भेदेन स्वरूपालम्भन कृतम्। ब्रह्मणा निर्मितम्। तथा मृद्विकारो घटादिर्मृदोऽन्यो न भवति। आदित्या-नुग्रहाद्ब्रह्मभावं प्राप्तस्य मम विकारः प्रपञ्चो मदन्यो

न भवतीति व्यतिरिक्तस्य पित्रादेराक्षेपः पूर्वोक्तः समर्थितः।

७। इदं यमस्य निरन्तुरादित्यस्य वैवस्वतस्य वा सदनं स्थानम्। छान्दसः सांहितिको दीर्घः। यत् सदनं देवमानं देवैर्निर्मितमित्युच्यते सर्वत्राभिधीयते। यद्वा। देवानां रश्मीनां निर्माणसाधनमिति गीयते। अस्य यमस्य प्रीणनार्थेयं नाडीर्वाद्यविशेषो वेणुर्धम्यते वाद्यते। यद्वा। नाडीति वाङ्नाम। इयं स्तुतिरूपा वागस्य प्रीणनाय धम्यते। उच्चार्यते। एवं सत्ययं यमो गीर्भिः स्तुतिभिः परिष्कृतः। अलङ्कृतोऽभूत्। सम्पर्य्युपेभ्य इति सुड़ागमः। परिनिविभ्य इति षत्वम्। गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्।

—०—

# VĀTA X. 168.



वातस्येति चतुर्ऋचं सप्तदशं सूक्तं वातगोत्रस्यानिलाख्यस्यार्षं त्रैष्टुभं वायुदेवताकम्। तथा चानुक्रान्तत् वातस्यानिलो वातायनो वायव्यमिति। गतो विनियोगः।

१। वातस्य वायो रथस्य रंहणशीलस्य महिमानं माहात्म्यं नु क्षिप्रं प्रब्रवीमि। अस्य वायोर्घोषः शब्दः स्तनयन् गिरिगह्वरादिषु विविधम् शब्दमुत्पादयन् रुजन् सर्वं स्थावरजङ्गमजातं भञ्जन्नेति। गच्छति। स च वायुर्दिविस्पृग्दिवमाकाशं स्पृशन् व्याप्नुवन्नरुणान्यरुणवर्णानि विकृतरूपाणि दिगन्तराणि कृण्वन् कुर्वन् याति। प्राप्नोति। उतो अपि च पृथिव्या भूमे रेणुं पांसुमस्यन् गृहीत्वा सर्वत्र विक्षिपन्नेति। गच्छति। अत एवारुणानि कृण्वन्नित्युक्तम्।

२। विष्ठा विशेषेणावस्थिताः पर्वताद्याः वातस्य वायोरनुगुणं सं प्रेरते सम्प्रगच्छन्ति। यदभिमुखो वायुर्वर्त्तते तदभिमुखाः प्रकम्पन्त इत्यर्थः। समनं न संग्राम-

मिवैनं वायुं योषा अश्वयोषितो वड़वा आ गच्छन्ति। ताभिर्वड़वाभिः स्वयुक् स्वयमेव युज्यमानं सरथं समानमेकं रथमारुह्य देवो दीप्यमानो वायुरीयते। गच्छति। ईङ् गतौ। अस्य विश्वस्य सर्वस्य भुवनस्य द्वितीयविकारभाजो भूतजातस्य राजा स्वामी भवति। यद्वा समनं हृष्टं पुरुषं योषा कामिन्य इव एनं वायुं तरुगुल्मादिरूपाः स्त्रियोऽभिगच्छन्ति। ताभिः सरथं सहरथं देव ईयत इति।

३। अन्तरिक्षे नभसि विद्यमानैः पथिभिर्मार्गैरीयमानो गच्छन्वायुः कतमच्चनाहरेकमपि दिनं न नि विशते। नोपविशति। किन्तु सर्वदैव गच्छति। नेर्विशः १।३।१७ इत्यात्मनेपदम्। अपि चापामुदकानां सखा।

वायुर्वै त्वष्टा ईश इति श्रुतेः। प्रथमजाः सर्वेभ्यः प्राणिभ्यः पूर्वोत्पन्न एवर्तावा सत्यवान् एवम्भूतो वायुः क्व स्वित् कुत्र खलु देशे जात उत्पन्नः कुतः कस्माच्च देशान्निष्क्रम्या बभूव। इद सर्वं जगद् व्याप्नोत्। सर्वदा सर्वत्र वर्त्तमानत्वादस्योत्पत्तिर्व्याप्तिप्रकारश्च न केनापि ज्ञातुं शक्यत इत्यर्थः।

४। अयम् वायुर्देवानामिन्द्रादीनामप्यात्मा जीवरूपेण तेष्ववस्थानाद्भुवनस्यापि भूतजातस्य गर्भो गर्भवत् प्राणरूपेणान्तर्वर्त्तमान एष ईदृशो देवो यथावशं यथाकामं

यथेच्छं चरति। वर्त्तते। अनिवारितगतिः सन् क्वचिच्छीघ्रं गच्छति क्वचिच्छनैर्गच्छति कुतश्चिच्छरीरान्निष्क्रामत्यन्यच्च शरीरं प्रविशतीत्येवं यथेच्छं वर्त्तत इत्यर्थः। अस्य वायोरागच्छतो घोषा इच्छब्दा एव शृण्विरे श्रूयन्ते। रूपं स्वरूपं तु न दृश्यते नीरूपत्वात्। अदृग्विषयत्वेन शब्देनैवानुमीयत इत्यर्थः। तस्मै वाताय वायवे हविषा चरुपुरोडाशादिलक्षणेन विधेम। परिचरेम।



समाप्तम्।